REPRODUCTION OF EARLIE EDITION OF THE
SABDARTHACINTAMANIH

# शब्दार्थचिन्तामणिः

# SABDARTHACİNTAMANIH

द्वितीय खण्ड

भाग - अ

ब्राह्मावधूत श्रीसुखानन्दनाथ

प्रिन्टवैल

जयपुर- 302 004

Published by
**PRINTWELL**
S-12 Shopping Complex
Tilak Nagar Jaipur 302 004

Distributed by
RUPA BOOKS PVT LTD
H O S-12 Shopping Complex Tilak Nagar Jaipur 302 004
B O 295-B Bharti Nagar P N Pudur Coimbatore 641 041

ISBN 81 7044-369 5 (Set)

**SABADARTH CHINTAMANI**
First Published 1860
Reprint 1992

*Printed at*
**Efficient Offset Printers**
215 Shahzada Bagh Indl Complex
Phase II Phone 533736 533762
Delhi 110035

च

च । अ । अन्वाचये ॥ यत्रैकस्य प्राधान्येना ऽपरस्य गौणत्वेनाख्यानं सोन्वाचयः । यथा । भोवटो भिक्षामट गाश्चानयेति । अत्र भिक्षाटनं प्रधान तत्कुर्वाणो यदि गाः पश्यसि तदा तामप्यानय नोचेत् भिक्षामेवाटेति ॥ समुच्चये । परस्परनिरपेक्षस्या नेकस्यै कस्मिन्नन्वये ॥ यथा । ईश्वर गुरुञ्च भजस्वेति । उभयत्र न समासो ऽसामर्थ्यात् ॥ इतरेतरयोगे । अन्योन्यार्थे । मिलितानामन्वये ॥ समाहारे । समूहे ॥ पक्षान्तरे ॥ पादपूरणे ॥ अवधारणे ॥ हेतौ ॥ तुल्ययोगितायाम् ॥ विनियोगे ॥ चनति चिनोति वा । चन शब्दे चिञ् चयने वा । अन्येभ्योपीति ड ॥ द्वौचकारावविलम्बस्तु चकोभवत ॥ चण्० यद्यर्थे शित् । समुच्चयाद्रौ त्वननुबन्ध ॥

च । पु । चण्डेशे ॥ कच्छपे ॥ चन्द्रे ॥ चौरे ॥ चवर्णे ॥ त्रि । दुर्जने ॥ निर्बीजे ॥

चकासत् । त्रि । प्रकाशमाने ॥ चकासि । चकासृदीप्तौ । लट. शत्रादेश ॥

चकितम् । न । भयसंभ्रमे ॥ त्रि । शङ्किते ॥ भीते ॥ तस्यलक्षणम् । प्रियाग्रे चकितभीते रस्थानेपि भयमहदिति ॥

चकिता । स्त्री । अष्टिसप्तकषोडशाच्छरायावृत्तौ ॥ भात् समतनगौ रष्टच्छेदेस्यादिहचकिता ॥ दुर्जयदनुजश्रेणी दुश्चेष्टाप्रतचकिता यद्भुजपरिघन्राता याताशाध्वसविभ्रमम् । दीव्यतिदिविषन्माला प्रत्यन्नन्दनविपिने गच्छत शरणं कृष्णा भोभीता भवरिपुत ॥

चकोर । पु । स्वनाम्ना प्रसिद्धे पक्षिविशेषे । कौमुदीजीविनि । चन्द्रिकापायिनि ॥ चटक शीतल कच्य वृष्य कापिक्तवातिघम् । तद्वच्चकोरज मांस दृष्यञ्च बलपुष्टिदम् ॥ चकति । चकतृप्तौ । कठिचकिभ्यामोरन् ॥

चकोरक । पु । चकोरे ॥ स्वा० कन् ॥

चक्र । पु । कोके । चक्रवाके । चकवा इतिप्रसिद्धे पक्षिणि ॥ न । व्रजे । गणे ॥ सैन्ये ॥ रथाङ्गे । चक्का पैया इतिचभाषा ॥ राष्ट्रे ॥ दम्भान्तरे ॥ कुम्भकारोप करणे । चाक इतिभा

षा ॥ अस्त्रविशेषे । प्रहरणे ॥ पुट भेदे । जलावर्त्ते ॥ ग्रामजाले ॥ त गरपुष्पे ॥ महाभारतप्रसिद्धे व्यूह विशेषे ॥ तैलयन्त्रे ॥ मूलाधार-स्वाधिष्ठानमणिपूरानाहतविशुद्धाज्ञा ख्येषु शरीरस्थेषु षट्सु ॥ सर्वतोभ द्रादौ । देवार्चाधारयन्त्रे ॥ मन्त्रदी क्षोपयोगिष्वकडमादिषु ॥ श्रीच क्रे ॥ कौलिकानां हितार्थाय श्री सदाशिवोक्तेषु महाचक्रादिपञ्चसु ॥ यथा । श्रीश्वरउवाच । चक्रं पञ्च विधप्रोक्तं श्रीतन्त्रेरुद्रयामले । विधि नापूजिते चक्रे सौख्यमोक्षफलंलभे त् ॥ महाचक्रं चक्रराजं दिव्यचक्रं त थापरम् । वीरचक्रं चतुर्थंञ्चपशुच क्रञ्चपञ्चममिति ॥ पञ्चचक्रे सका मानामधिकारः । यथा । राजचक्रं रा ज्यदं स्यात् महाचक्रन्तु मोक्षदम् । देवत्वदं देवचक्रं वीरचक्रन्तु सिद्धि दम् ॥ पशुचक्रन्तु दारिद्र्यदुःखशो कामयप्रदम् । कापञ्चेदृश्चिणाङ्गेलि सर्वचक्रन्तु निष्फलमिति ॥ सकामा श्चैव निष्कामाद्विविधा भुविमानवा । चुद्राशया कामिनोये तेषां महा धिकारिता ॥ * ॥ ब्रह्मज्ञानायतु मो क्षा कौलानांचक्रमुत्तमम् ॥ ब्रह्मज्ञान युतानान्तुतत्त्वचक्रेऽधिकारिता ॥ य थोक्तं श्रीमहानिर्वाणे । नात्राधिका रः सर्वेषां ब्रह्मज्ञान साधकान् वि ना । परब्रह्मोपासका ये ब्रह्मज्ञा ब्र ह्मतत्पराः । शुद्धान्तःकरणाः शान्ताः सर्वप्राणिहिते रताः ॥ निर्विकारा नि र्विकल्पा दयाशीला दृढव्रताः । स त्यसङ्कल्पका ब्राह्मा स्तएवात्राधि कारिणः ॥ ब्रह्मभावेन तत्त्वज्ञे ये प श्यन्ति चराचरम् । तेषां तत्त्वविदां पुंसांतत्त्वचक्रेऽधिकारिता ॥ सर्व-ब्रह्ममय भावश्चक्रेऽस्मिंस्तत्त्वसञ्ज्ञ-के । येषामुत्पद्यते देवि त एवतत्त्व चक्रिणइति ॥ छन्दोविशेषे । यथा । कुसुमलकलितनमणिमहितयमन्थ कुसुमरसविरचय वलयम् । चक्र मुरगपतिवरपरिगुणित षोडशक ल मतिसुललितभणितम् ॥ सुन्द रि नभसि जलदचयरुचिरे देहिन यनयुग मतिघनचिकुरे । मान मि हहि जहि जलधरसमये किन्तव भ वति हृदय मिह मदयेदिति ॥ क्रिय तेऽनेन । घञर्थे क । के कृञादीना मितिद्वित्वम् ॥ अर्द्धर्चादि ॥

चक्रक । त्रि । तर्कविशेषे ॥ अन्यो न्याश्रयमेवावर्त्तितं चक्रकं भवति । स्वापेक्षापेक्ष्यपेक्षानिबन्धनेऽनि ष्टप्रसङ्गे । चतुष्कपादावपि स्वस्य

स्वापेक्षापेक्ष्यपेक्षित्वसत्त्वान्नाधिक्यम् ॥ असात्माश्रयवत् वैविध्यम् ॥ अपिचास्यलक्षण यथा । स्वापेक्षणीयापेक्षितसापेक्षितत्वनिबन्धनप्रसङ्गत्वमिति । अपेक्षाच ग्रमावुत्पत्तौ स्थितौच ग्राह्या । तत्राद्या यथा । एतद्घटज्ञानं यद्येतद्घटज्ञानजन्यज्ञानजन्यज्ञानजन्यस्यात् तदाएतद्घटज्ञानजन्यज्ञानजन्यज्ञानभिन्न स्यात् । द्वितीया यथा । घटोयद्येतद्घटजन्यजन्यजन्य स्यात् तदा एतद्घट जन्यजन्यभिन्न स्यात् । तृतीया यथा । घटोय यद्येतद्घटवृत्तिवृत्ति स्यात् तथात्वेनोपलभ्येतेति । इतितर्कशास्त्रम् ॥

चक्रकारकम् । न । व्याघ्रनखाख्यगन्धवस्तुनि । करजे ॥ चक्रस्यकारकम्॥

चक्रकुल्या । स्त्री । पृश्निपर्ण्याम् ॥

चक्रगज । पु । चक्रमर्दे ॥

चक्रगण्डु । पु । वर्त्तुलाकारोपधाने । चातुरे । गालसिरहाना गोलसिरहाना इतिचभाषा ॥

चक्रगदाधर । पु । परमात्मनि वासुदेवे ॥ मनस्तत्त्वात्मकं चक्रं बुद्धितत्त्वात्मिका गदाम् । धारयन् लोकरक्षार्थं गुप्तश्चक्रगदाधर ॥ चक्रगदे धरति । धृञ्० । पचाद्यच् ॥ चक्रगदयोर्धरोवा ॥

चक्रगुच्छ । पु । अशोकपादपे ॥

चक्रजीवक । पु । कुलाले । कुम्भकारे ॥ चक्रं जीवनमस्य ॥

चक्रदंष्ट्र । पु । शूकरे ॥

चक्रदन्ती । स्त्री । दन्तीवृक्षे ॥

चक्रदन्तीबीजम् । न । जयपाले ॥

चक्रधर । पु । अजे । विष्णौ ॥ अहौ । सर्पे ॥ त्रि । चक्रिणि ॥ ग्रामजालिनि ॥ धरति । धृञ्० । अच् । चक्रस्यधर ॥ चक्रधारयति वा । अच् वा हुलकाण्णिलुक् ॥

चक्रधारम् । न । अक्षे । रथावयवे काष्ठविशेषे ॥

चक्रधारा । स्त्री । प्रधौ ॥ चक्रस्यधारा ॥

चक्रनख । पु । व्याघ्रनखाभिधेगन्धद्रव्ये ॥

चक्रनदी । स्त्री । गण्डक्याम् ॥

चक्रनामा । पु । माक्षिकधातौ ॥

चक्रनायक । पु । व्याघ्रनखे ॥

चक्रपट्टाट । पु । दद्रुघ्न ॥

चक्रपरिव्याध । पु । आरग्वधवृक्षे ॥

चक्रपर्णी । स्त्री । पृश्निपर्ण्याम् ॥

चक्रपाणि । पु । विष्णौ । नारायणे ॥ चक्रं पाणौ यस्य स । प्रहरणार्थेभ्य परे निष्ठासप्तम्याविति सप्तम्या परत्वम् ॥

चक्रपादः । पु । रथे ॥ गजे । हस्तिनि ॥

चक्रपुष्करिणी । स्त्री । मणिकर्णिकायाम् ॥

चक्रफलम् । न । अस्त्रविशेषे । अङ्गने ॥

चक्रबन्ध । पु । चित्रकाव्यविशेषे ॥

चक्रबन्धु । पु ।
चक्रबान्धव । पु । } रवौ ॥

चक्रभृत् । पु । विष्णौ ॥

चक्रभेदिनी । स्त्री । रात्रौ ॥

चक्रभ्रम । पु ।
चक्रभ्रमि । स्त्री । } कुन्दाख्ये शिल्पियन्त्रे । चक्राकारे शस्त्रोत्तेजनयन्त्रे । शाणे ॥

चक्रमण्डली । पु । अजगरसर्पे ॥

चक्रमर्द । पु । चकवंड इति कसौंदी इतिच भाषाप्रसिद्धे क्षुपविशेषे । दद्रुघ्ने । एडगजे ॥ चक्रमर्दो लघुः स्वादू रूक्षः पित्तानिलापहः । हृद्यो हिमः कफश्वासकुष्ठदद्रुकृमीन् हरेत् ॥ हन्त्युष्णं तत् फलं कुष्ठकण्डु दद्रुविषानिलान् । गुल्मकासकृमिश्वासनाशनकटुकं स्मृतम् ॥ चक्रं दद्रुं मर्दनाति । मृदक्षोदे । कर्मण्यण् ॥

चक्रमर्दक । पु । चक्रमर्दे ॥ स्वा० कन् ॥

चक्रयानम् । न । असाङ्ग्रामिके रथे । पुष्परथे ॥

चक्रयानकम् । न । चक्रयाने ॥

चक्ररद । पु । शूकरे ॥

चक्रलक्षण । पु । विष्णौ ॥ रथे ॥

चक्रलक्षणा । स्त्री । गुडूच्याम् ॥

चक्रलताम्र । पु । बदरसालवृक्षे ॥

चक्रला । स्त्री । उच्चटायाम् । मुस्ताविशेषे ॥ चक्रं लाति । ला० । आत इति क ॥

चक्रवर्त्ती । पु । समुद्रपरिवृताया सर्वभूमेरीश्वरे । सार्वभौमे ॥ चक्रे भूमण्डले राजमण्डले वर्त्तितुं चक्रं सैन्यं वर्त्तयितुं सर्वभूमौ चालयितुं वा शीलमस्य । सुपीतिणिनि ॥ अवश्यं वा चक्रं वर्त्तयति । आवश्यके णिनि ॥ वास्तूके ॥ डगणे मध्यगुरौ । ऽ । सञ्ज्ञायाम् ॥ त्रि । चक्रवर्त्तिनि ॥

चक्रवर्त्तिनी । स्त्री । जन्याम् । जतूकायाम् ॥ अलक्तके ॥ जटामांस्याम् ॥

चक्रवाक । पु । कोकपक्षिणि । चकवा इति भाषा ॥ अस्यमांसं लघु स्निग्धं बलप्रदं मदाढ्यम् ॥ चक्रशब्देन उच्यते । वचपरिभाषणे । घञ् । न्यङ्क्वादि. ॥

चक्रवाकी । स्त्री । चक्रवाकस्य विहङ्ग्याम् । चकवा इति भाषा ॥ जातेरिति ङीष् ॥

चक्रवाटः । पु । क्रियारोहे ॥ शिखातरौ ॥ पर्यन्ते ॥ मेरोर्मस्तकसमीपे लोकपालाश्रयभूताया अष्टादशसहस्रयोजनविस्तीर्णायां नेमौ ॥

चक्रवाड । पु । लोकालोकाख्यपर्वते ॥ चक्राकारेण वाडते । वाडृ आप्लाव्ये । अच् ॥ न । चक्रवाले । मण्डले ॥ चक्र भूमण्डल वलते । वल वेष्टने । कर्मण्यण् । डलयोरेकत्वम् ॥

चक्रवात । पु । वात्यायाम् । वबूरा इति भाषा ॥

चक्रवाल । पु । लोकालोकपर्वते ॥ न । मण्डलाकारेण परिणतसमूहे । मण्डले ॥ चक्राकारेण वलते । वल सञ्चरणे । अच् । अन्येषामपीतिदीर्घं ॥ यद्वा । भावेघञि वालः । चक्रमिववालोऽस्य ॥ चक्र भूमण्डलं वलते । वल वेष्टने । कर्मण्यणुत्रा ॥ चक्रवालमस्याऽस्तीतिवा । अर्श आद्यच् ॥

चक्रवृद्धि । स्त्री । यत्र वृद्धिरूपधनदातुमशक्तोऽधमर्णः सवृद्धिकमिदं दास्यामीतिस्वीकरोति तत्र या वृद्धिः सा । सूदका सूद इति भाषा ॥ वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृतेति नारद ॥

चक्रव्यूह । पु । युद्धार्थं मण्डलाकारेण सैन्यरचनायाम् ॥

चक्रशल्या । स्त्री । काकतुण्ड्याम् ॥ श्वेतगुञ्जायाम् ॥

चक्रश्रेणी । स्त्री । अजशृङ्ग्याम् ॥

चक्रसंज्ञम् । न । वङ्गे ॥

चक्रसम्वर । पु । बुद्धभेदे । वज्रटीके ॥

चक्रा । स्त्री । नागरमुस्तायाम् ॥ कर्कटशृङ्ग्याम् ॥

चक्राङ्ग । पु । श्वेतगरुति । हंसे ॥ चक्राण्यङ्गान्यस्य ॥ रथे ॥ चक्रमङ्गमस्य ॥

चक्राङ्गा । स्त्री । सुदर्शनायां लतायाम् ॥

चक्राङ्गी । स्त्री । कटुरोहिण्याम् ॥ हिलमोचिकायाम् ॥ मञ्जिष्ठायाम् ॥ वृषपर्ण्याम् ॥ कर्कटशृङ्ग्याम् ॥ चक्राकारमङ्गमस्याः । गौरादित्वान् ङीष् ॥ हंस्याम् ॥

चक्राट । पु । विषवैद्ये ॥ धूर्त्ते ॥ दीनारे ॥

चक्राधिवासी । पु । नारङ्गवृक्षे । किर्मीरत्वचि ॥

चक्रावर्त्त । पु । घूर्णने ॥

चक्राह्व । पु । चक्रमर्द्दे ॥

चक्रिक । पु । घटिके । घटिकावादके ॥ चक्रं वाद्यत्वेनास्त्यस्य । ठन् ॥

चक्रिका । स्त्री । दुरुद्योगे ॥ घुणावर्त्ते ॥ जानुनि ॥ चक्री इतिभाषा प्रसिद्धे द्रव्यस्वरूपे ॥

चक्री । पु । जालिकभिदि ॥ कोके ॥ कुलाले ॥ अहौ ॥ सूचके ॥ वैकुण्ठे । नारायणे ॥ चक्रं मनस्तत्त्वात्मकं सुदर्शनाख्य मस्यास्ति इनि ॥ चक्रवर्त्तिनि ॥ चक्रमर्द्दे ॥ तिनिशे ॥

व्यालनखे ॥ काके ॥ खरे ॥ त्रि । चक्रविशिष्टे ॥ चक्रमस्यास्ति । अतइनिठनाविति इनिः ॥ चक्रयुक्तरथादियानारूढे ॥

चक्री । स्त्री । चक्री इतिसर्वजनप्रसिद्धाया चूर्णपेषणाश्मन् । जाँता इति भाषा ॥

चक्रीवान् । पु । गर्दभे ॥ चक्रवङ्कमणांचक्रम् । तदस्यास्ति । मतुप् । आसन्दीवदितिसाधु ॥ चक्रीवान्नाम राजापि ॥

चक्रुः । पु । कर्त्तरि ॥ करोति । डुकृञ० । कृञश्चेति चकारात्कु प्रत्ययेधातोर्द्वित्वञ्च ॥

चक्रेश्वरी । स्त्री । जिनानांविद्यादेवीविशेषे ॥ इतिहेमचन्द्र ॥

चषणम् । न । अवदंशे । मद्यपानरोचकभक्ष्यद्रव्ये । चखना इति भाषा ॥

चक्षाः । पु । वृहस्पतौ ॥ उपाध्याये ॥

चक्षुःश्रवाः । पु । सर्पे ॥ चक्षुःश्रव कर्णोऽस्य । सान्तः ॥

चक्षुर्वर्द्धनम् । न । मेषशृङ्गीवृक्षे ॥

चक्षुष्यः । पु । केतके ॥ पुण्डरीकवृक्षे ॥ शोभाञ्जनवृक्षे ॥ रसाञ्जने ॥ न । सौवीराञ्जने ॥ खर्परीतुत्थे ॥ प्रपौण्डरीके । स्थलपद्मे ॥ त्रि । प्रियदर्शने ॥ अभिप्सिते ॥ चक्षुषादर्शनीये ॥ चक्षुषेहितम् । शरीरावयवाद्यत् ॥

चक्षुष्या । स्त्री । कुलत्थिकायाम् ॥ सुभगायाम् ॥ अजशृङ्ग्याम् ॥ अरण्यकुलत्थिकायाम् ॥ चक्षुषेहिता । यत् । टाप् ॥

चक्षुः । न । लोचने । नयने । नेत्रे । रूपग्रहणलिङ्गेन्द्रिये । रूपप्रकाशके ॥ उद्भूतरूपं नयनस्यगोचरो द्रव्याणि तद्वन्ति पृथक्त्वसङ्ख्ये । विभागसंयोगपरापरत्वस्नेहद्रवत्वं परिमाणयुक्तम् ॥ क्रियां जातिं योग्यवृत्तिसमवायञ्च तादृशम् । गृह्णाति चक्षुः संयोगादालोकोद्भूतरूपयो रिति कारिकावली ॥ पाणिभ्यां न स्पृशेच्चक्षु श्चक्षुषी नैकपाणिनेतिकर्मलोचनम ॥ चष्टेपश्यत्यनेन चष्टेरूपमनुभवत्यनेन वा । चक्षिङ्० । चक्षे शिच्चेत्युसि. । शित्वादनार्द्धधातुकत्वात् ख्याञ् न ॥ मेषशृङ्गीवृक्षे ॥

चङ्कुरः । पु । स्यन्दने । रथे ॥ वृक्षे ॥ न । धोरणे । यानमात्रे ॥ चङ्कति । चकि. सौत्र । मन्दिवाशिमथिचति चङ्क्यङ्किभ्यउरच् ॥

चङ्क्रमणम् । न । अतिशयभ्रमणे । इतस्ततो भ्रमणे ॥ पुनः पुनर्भ्रमणे ॥ अनतिदेहपीडाकारकचङ्क्रमणस्य गु

या । आयुर्बलमेधाग्नीन्द्रियशुद्धिकारित्वम् ॥ सदोपानद्रहितपादचङ्क्रमणगुणा । अनारोग्यत्वम् । अनायुष्यत्वम् । इन्द्रियदृष्टिनाशित्वञ्चेतिराजवल्लभ ॥

चङ्ग । त्रि । शोभने ॥ दक्षे ॥ इति मेदिनी ॥

चचेण्डा । स्त्री । फललताविशेषे । वृहत् फले ॥

चञ्च । पु । पञ्चाङ्गुले ॥ चञ्चति । चञ्चुगतौ । पचाद्यच् ॥

चञ्चत् । त्रि । देदीप्यमाने ॥

चञ्चत्पुट । पु । तालप्रभेदे ॥ ताले चञ्चत्पुटेचैव गुरुद्वन्द्वलघुप्लुतम् ॥

चञ्चरी । स्त्री । तिन्तिडीवृते ॥भ्रमर्याम् ॥

चञ्चरीक । पु । भ्रमरे । षट्पदे ॥ चञ्चति । चञ्चु० । पर्फरीकादित्वात् साधु ॥ चरति वा । चर० । पर्फरीकादित्वादीकन् चरेर्नुम्च ॥

चञ्चल । पु । कामुके ॥ अनिले ॥ त्रि । अस्थिरे । सदाचलनस्वभावे । लोले । तरले ॥ कदाचिन्नञ्चलासती । चञ्चति । चञ्चु० । बाहुलकात् अलच् ॥

चञ्चला । स्त्री । लक्ष्म्याम् ॥ तडिति ॥ पिप्पल्याम् ॥ वर्णवृत्तविशेषे । यथा । तूर्यतालपञ्चिराजमेवहारनायकेन चामरध्वजेन चापि मण्डिता सुवर्णकेन । वर्णिताऽतिसुन्दरेण पन्नगेन्द्रपिङ्गलेन चञ्चलाचकोरचारुलोचने सुमङ्गलेन ॥ यथा । आलियाहि मञ्जुकुञ्जगुञ्जितालिमालिते न भास्करात्मजाविराजिरम्यतीरकाननेन । शोभिते स्थले स्थितेन सङ्गता यदूत्तमेन माधवेन भाविनी तडिल्लतेव नीरदेनेति ॥ चञ्चनम् । चञ्चु० । घञ् । चञ्च लाति । ला०क ॥

चञ्चा । स्त्री । नलनिर्माणे । नलनिर्मिते । चाच इतिगौडभाषा ॥ तृणनिर्मितपूरुषे । बजूका इतिभाषा ॥ चञ्चति । चञ्चु० । अच् । टाप् ॥ चञ्चेव मनुष्य । लुम्मनुष्य इति कनोलुप् ॥

चञ्चु । पु । नाडीचशाके ॥ व्यडम्बके । रक्तैरण्डे ॥ एरण्डसामान्ये ॥ क्षुद्रचञ्चुवृक्षे ॥ स्त्री । पक्षिणामोष्ठे । त्रोट्याम् । चूच इति भाषा ॥ चञ्चति । चञ्चु० । बाहुलकादु ॥ चिञ्चुक्याम् । चेचूनाडीतिश्रुते ॥ चञ्चु शीता सरा रुच्या स्वादी दोषनाशपहा । धातुपुष्टिकरी बल्या मेध्या पिच्छिलिका स्मृता ॥ पत्रशाकविशे

षे। विजलायाम्। चीरपत्रिकायाम्॥

चञ्चुका। स्त्री। चञ्चौ। पक्षिणामोष्ठे॥

चञ्चुपत्र। पु। सुशाके। विजलायाम्॥

चञ्चुभृत्। पु। स्त्री। } खगे। पक्षि
चञ्चुमान्। पु। स्त्री। } णि॥

चञ्चुर। पु। चञ्चुशाके॥

चञ्चुसूचि। पु। } सुगृहे। पीतलु
चञ्चुसूचिक। पु। } ण्डे। बया इतिभाषा॥ चञ्चौ। सूचिरस्य। स्वार्थे क॥

चञ्चू। स्त्री। चञ्चाम्। चोष्ठाम्॥ अद्भुत॥

चञ्चूक। पु। चेचू इतिप्रसिद्धे शाके॥

चटक। पु। कलविङ्के। गृहनीडे। चिडा इतिभाषा॥ चटतिभिनत्ति गृहीतधान्यादिकं मुखेन। चटभेदने। पचाद्यच्। तस्मात् स्वार्थे क॥

चटकका। स्त्री। चटकायाम। चटकिकायाम्॥ उदीचामात.स्थानइति पक्षेइदादेशाभाव.॥

चटका। स्त्री। चटकस्त्रियाम्॥ चटकश्च चटकाया वा स्त्र्यपत्ये। चिडिया इतिभाषा॥ चटकस्य चटकाया वा स्त्र्यपत्यम्। चटकायाऐरक्। स्त्रियामपत्येलुग्वक्तव्यः। तच टाबन्तात् तद्धितेलुसे लुकृतद्धितलुकी तिटापोलुकि पुनराद्दिलक्षणष्टाप्. तच जातिलक्षणङीषोवाधइति भाव॥ नचात्रप्रत्ययस्यादितीत्वार म्भः चटकायाऐरगितिलिङ्गादृशादिपुनिपातनाद्दात्रप्रत्ययुसे। क्षिपकादिस्वाजेव मितितुयुक्तम्। पुंयोगलक्षणो जातिलक्षणो वा ङीष् अजादिपाठाद्वाध्यते॥ श्यामास्यपक्षिणि॥

चटकाशिरः। न। पिप्पलीमूले॥ चटकाया शिरइव॥

चटकिका। स्त्री। चटककायाम्॥ उदीचामात स्थानेयकपूर्वायाः इतिपक्षेइदादेश॥

चटु। अ। प्रियेवाक्ये॥

चटु। पुं। चटौ। प्रियेवाक्ये॥ व्रतिनामासने॥ पिचण्डे। उदरे॥ चटति। चट०। मृगय्वादित्वात् कु॥

चटुल। त्रि। चञ्चले॥ शोभने॥ चटति। वाहुलकादुलच्॥ मत्वर्थे सिध्मादित्वाल्लच्वा॥

चटुला। स्त्री। विद्युति॥ अजा० टाप्॥

चटुलोल। त्रि। चाटुलेले। सुचञ्चले॥ इति शारावली॥

चटूलम्। न। सिद्धपीठविशेषे॥ यथा। चटूले दक्षबाहुर्मे भैरवश्चन्द्रशेखर। व्यक्तरूपा भगवती भवानी तत्रदेवता। विशेषतः कलियुगे वसामिचन्द्रशेखरे। इति॥

चणक । पु । शस्यविशेषे । हरिमन्थे ॥ चणक शीतलो रूक्ष पित्तरक्तकफापह । लघु कषायो विष्टम्भी वातलो ज्वरनाशन ॥ सचाङ्गारेणसम्भृष्ट स्तैलभृष्टस्तु तद्गुण । आर्द्रभृष्टो बलकरो रोचनश्च प्रकीर्त्तित ॥ शुष्कभृष्टोऽतिरूक्ष स्याद्वातकुष्ठप्रकोपन । स्विन्न पित्तकफ हन्यात् सूप क्षोभकरोऽहित ॥ आर्द्रोतिकोमलो रुच्य' पित्तरक्तहरोहिम' ॥ * ॥ हरितार्द्रचणकरन्धनन्तु । सुहरितहरिमन्थ क्षोदभिन्नो नवाग्रै प्रथम मुदकसिक्तोवेसवारेणसिद्ध । लवणमरिचसङ्गाढ् तैलहिङ्गुप्रसिक्त शिखरयति विशेषाज्जाठर मन्दवह्निम् ॥ छोलाभिधानकफल परिगृह्य शुद्ध लसे घृते सुललितक्वथितोषणाभ्याम् । ससाधित सुरभित शुचिरामठेन जिह्वातले विशतिनित्यमतिप्रकामम् ॥ चण्यते । चणदाने । कुन् ॥ मुनिविशेषे ॥

चणकरोटिका । स्त्री । चणकमुद्रायाम् ॥ चाणक्यरोटिका रूक्षा श्लेष्मपित्तास्रनुद्गुरु । विष्टम्भिनी न चक्षुष्या तद्गुणा तिलशष्कुली ॥

चणकशाकम् । न । स्वनाम्ना प्रसिद्धे शाके ॥ रुच्य चणकशाक स्याद् दुर्जरं कफवातकृत् । अम्ल विष्टम्भजनक पित्तनुद्दन्तशोथहृत् ॥ सुकृत्त चाणक शाक मम्लतक्रेण साधितम् । सहिङ्गुलवणेतप्ते भर्जितरामठान्वितम् ॥ चाराम्लभावसहजा स्वणकप्रवाला सम्मर्दितामरिचसैन्धवशृङ्गबेरै' । सञ्चूर्णिता कटुकतैलयुतै सुपक्वैर्भृष्टै सुहिङ्गुचणकै परिदत्तवासा ॥

चणकात्मज । पु । वात्स्यायनमुनौ ॥

चणकाम्लम् । न । चणकक्षारे ॥ चणकाम्लक मत्यम्ल दीपन दन्तहर्षकम् । लवणानुरस रुच्य शूलाजीर्णविबन्धनुत ॥

चणकाम्लवा, । न । चेत्रस्थफलवच्चणकपत्रशिशिरवारिणि ॥

चणद्रुम । पु । क्षुद्रगोक्षुरे ॥

चणपत्री । पु । रुदन्तीवृक्षे ॥

चणिका । स्त्री । तृणविशेषे । गोदुग्धायाम् ॥

चण्ड । पु । तिन्तिडीवृक्षे ॥ यमकिङ्करे ॥ दैत्यविशेषे ॥ न । तीक्ष्णे ॥ त्रि । अतिकोपने ॥ तीव्रे ॥ ती, क्ष्णवति ॥ चण्डते । चडिकोपे । पचाद्यच् ॥ चमति । चमुअदने । चणति वा । चणदाने । अमन्ताड्ड ॥

चण्डता । स्त्री । उग्रतायाम् ॥ भावे तल् ॥

चण्डनायिका । स्त्री । दुर्गायाम् ॥ अष्टनायिकान्तर्गतनायिकाविशेषे ॥

चण्डमुण्डी । स्त्री । स्थानविशेषे ॥ यथा । चण्डमुण्डी महास्थाने दण्डिनी परमेश्वरीति ॥

चण्डचन्द्रिका । स्त्री । विद्याविशेषे ॥

चण्डवती । स्त्री । चण्डीविशेषे ॥

चण्डवृष्टिप्रताप । पु । दण्डकविशेषे । यथा । यदिह नयुगलं ततः सप्त रेफा स्तदा चण्डवृष्टिप्रतापो भवेद्दण्डकः । यथा । प्रलयघनघटामहारम्भमेघावलीचण्डवृष्टिप्रतापाकुलं गोकुलम् सपदि समवलोक्य सव्येन हस्तेन गोवर्द्धनं नाम शैलं दधल्लीलया । कमलनयन रक्षरक्षेतिगर्ज्जत्चलन्मुग्धगोपाङ्गनालिङ्गनानन्दितो गलद्भिन्नधातुधाराविचित्राङ्गरागो मुरारातिरस्तु प्रमोदाय वस्तृति ॥

चण्डा । स्त्री । धनहरीद्रुमे । चोरनामगन्धद्रव्ये ॥ शङ्खपुष्प्याम् ॥ अष्टनायिकान्तर्गतनायिकाविशेषे ॥ जिनानां शासनदेवताविशेषे ॥ लिङ्गिनीलतायाम् ॥ कपिकच्छ्वाम् ॥ आखुपर्ण्याम् ॥ श्वेतदूर्वायाम् ॥ पद्मावतीनद्याम् ॥ टाप् ॥

चण्डांशु । पु । सूर्ये ॥ चण्डाअंशवो यस्य ॥

चण्डात । पु । करवीरे ॥ चण्डमतति । अत० । कर्म्मण्यण् ॥

चण्डातक । पु । न । अर्द्धोरुके । वरस्त्रीणामर्द्धोरुपर्य्यन्तवस्त्रे ॥ चण्डां कोपनां वरस्त्रियमतति । अत० । क्वुन् ॥

चण्डाल । पु । शूद्राद्ब्राह्मण्यामुत्पन्ने । प्लवे । मातङ्गे । दिवाकीर्त्तौ । श्वपचे । न्त्यजाधमे ॥ चण्डते । चण्डि० । पतिचण्डिभ्यामालञ् ॥

चण्डालकन्द । पु । कन्दविशेषे ॥

चण्डालवल्लकी । स्त्री । चण्डालवीणायाम् । चाण्डालवीणायाम् । किङ्गरीतिभाषा ॥ चण्डालस्य वल्लकी ॥

चण्डालिका । स्त्री । किन्नरायाम् ॥ उमायाम् ॥ ओषधीभेदे ॥

चण्डि । स्त्री । चण्ड्याम् ॥ चण्डति । चडि० । सर्वधातुभ्य इन् ॥

चण्डिका । स्त्री । भवान्याम् । चण्ड्याम् ॥ अस्याः स्थानममरेशे ॥ चण्डि क । स्वार्थे कन् । टाप् ॥

चण्डिकेश्वर । पु । शिवे ॥

चण्डिमा । पु । चण्डत्वे ॥ चण्डस्य भाव । पृथ्वा० इमनिच् ॥

चण्डिल । पु । रुद्रे ॥ वास्तूकशाके ॥ ना

पित्ते ॥

चण्डिला । स्त्री । नदीविशेषे ॥

चण्डी । स्त्री । कात्यायन्याम् । दुर्गायाम् ॥ हिंस्रायांनार्याम् ॥ कोपनायां योषिति ॥ मार्कण्डेयपुराणोक्ते श्रीदेवीमाहात्म्ये ॥ अतिजगती सप्तकवर्णयोदशाक्षरावृत्तिविशेषे । यथा । नयुगलसयुगलगैरिति चण्डी ॥ जयति दितिजरिपुताण्डवलीला कुपितकवलकरकालियमौलौ । चरणकमलयुगचापलचण्डी पदनखरुचिजितभोगमणिश्री ॥ चण्डति । चडिकोपे । पचाद्यच् । बह्वादिभ्यश्चेतिङीष ॥

चण्डीकान्त । पु । सदाशिवे ॥ चण्डाकान्त ॥

चण्डीकुसुम' । पु । रक्तकरवीरवृक्षे॥

चण्डीश । पु । शिवे ॥

चण्डु । पु । उन्दुरौ ॥

चतु'पत्री । स्त्री । क्षुद्रपाषाणभेदिनि॥

चतु पर्णी । स्त्री । क्षुद्राम्लिकायाम् ॥

चतु पला । स्त्री । नागबलायाम् ॥

चतु पुण्ड । पु । भिण्डावृक्षे ॥

चतु शालम् । न । सञ्जवने । अन्योन्याभिमुखगेहचतुष्टयगृहे ॥ चतस्रःशाला समाहृता । आवन्तोवेतिक्लीवरम् ॥ पक्षेचतु शाली ॥

चतु'षष्टि । स्त्री । कलाभेदे । कलानामन्युपविद्यायाम् ॥ सङ्ख्याभेदे । चौसठ इतिभाषा ॥ बहुव्रीहि । तृभेदे ॥ चतुरधिकाषष्टि ॥

चतु सम्म् । न । मिलितचन्दनागुरुकस्तूरीकुङ्कुमरूपे ॥ औषधविशेषे ॥ यथा । लवङ्ग सैन्धव पथ्या यमानीचचतु समम् । आमशूलविबन्धघ्न पाचन भेदिशोषनुत् ॥ अन्यच्च । जातीफल चिदशपुष्पसमन्वितञ्च जीरञ्च टङ्कणयुत चरकेणचोक्तम् । चूर्णानि माक्षिकसितासहितानि लीढ्वा आमातिसार मखिल गुरु हन्ति शूलमिति ॥

चत्वार । त्रि । सङ्ख्याविशेषे । चार इति भाषा ॥ सङ्ख्येये ॥ यथा । चत्वारोवेदा । चतस्र स्त्रिय । चत्वारिफलानि ॥ चतति चत्यते वा । चतेयाचने । चतेरुरन् ॥

चतुर । पु । चक्रगण्डौ ॥ न । हस्तिशालायाम् ॥ त्रि । नेत्रगोचरे ॥ चटुकारे ॥ कार्यकुशले । दृक्षे । पटौ । निपुणे ॥ चतति चत्यते वा । चतेः । मन्दिवाशिमथिचति चङ्क्यङ्किभ्यउरच् ॥

चतुरसा । स्त्री । वर्णवृत्तप्रभेदे ॥ यथा । द्विजवरकर्णौ विह रसवर्णौ भ

वति यद्रासा किलचतुरसा ॥ यथा । जयजयविष्णो त्रिभुवनजिष्णो । अपनयदुःख प्रवितरसौख्यमिति ॥ यथावा । तवरतिशाली यदिवनमाली । विविधविलासे सखिकिमुदासे इति ॥

चतुरक्रमः । पु । सप्तधारूपकान्तर्गतरूपकभेदे ॥ द्रुतद्वन्द्वलुतद्वन्द्व तथा प्रान्तेगुरुर्भवेत् । द्वाविंशत्यक्षरैर्युक्त शृङ्गारे चतुरक्रमइतिदामोदरोक्ते ॥

चतुरङ्गम् । न । हस्त्यश्वरथपदातिरूपे सैन्ये ॥ यथा । चतुरङ्गद्युपिवल सुमहत प्रसहेम हीतिरासायथम् ॥ * ॥ चौरङ्खेल इति सतरञ्जखेल इतिच प्रसिद्धे क्रीडाविशेषे ॥ यथा । युधिष्ठिरउवाच । अष्टकोष्ठगताश्च या क्रीडा तां मे ब्रूहि तपोधन । प्रकर्षणैवमेनाथचतूराजीयतो भवेत् ॥ व्यासउवाच । अष्टौकोष्ठानुसमालिख्य प्रदक्षिणक्रमेणतु । अरुणं पूर्वत. कृत्वा दक्षिणे हरितंबलम् ॥ पार्थपश्चिमत पीतमुत्तरेश्यामलं बलम् । राज्ञोवामेगज कुर्यात् तस्मादश्व तत स्तरिम् ॥ कुर्यात् कोणेयपुरतो युद्धे पत्तिचतुष्टयम् । कोणेनौका द्वितीयेऽश्वस्तृतीयेतु गजो वसेत् ॥ तुरीयेतुवसेद्राजा वटिका



पुरत. स्थिता । * । पश्चकोन वटी राजा चतुष्कोणेव कुञ्जर ॥ त्रिकोणतुचलत्यश्व पार्थनौका द्वयेनतु । * । कोष्ठमेक विलङ्घ्याथ सर्वतोयातिभूपति ॥ अग्रएव वटीयाति वलत्यग्रकोणगम् । यथेष्ट कुञ्जरोयाति चतुर्दिक्षु महीपते ॥ तिर्यक्तुरङ्गमोयाति लङ्घयित्वात्रिकोष्ठकम् । कोणकोष्ठद्वय लङ्घ्य गजेन्नौकायुधिष्ठिर ॥ * ॥ सिंहासन चतराजी न्वपाकृष्टन्तुषट्पदम् । काककाष्ठ तू हन्नौका नौकाकृष्टप्रकारकम् ॥ * ॥ घाताघाते वटीनौका वल हन्ति युधिष्ठिर । राजा गजो हयश्चापि त्यक्त्वा घात निहन्तिच ॥ अन्यन्न स्वबल रचेत् स्वराजावलमुत्तमम् । अल्पस्यारक्षणापार्थहन्तव्य वलमुत्तमम् ॥ नौकायाश्चत्वारिपदानि अश्वस्याष्टौपदानि इत्याधिक्य मश्वस्य ॥ मतङ्गजस्य गर्वेणराजा क्रीडतिनिर्भरम् । तस्मातसर्ववल दत्त्वा रचेत् कौन्तेयकुञ्जरम् ॥ सिंहासन चतूराजी यदवस्थानतो भवेत । सर्वसैन्यैर्गजै र्वापि रक्षितव्यौ महीपति ॥ * ॥ अन्यद्राजपद राजा यदाक्रान्तो युधिष्ठिर । तदासिंहासन तस्य भवयते न्वपसत्तम ॥ राजाचन्वपतिहत्वा

कुर्य्यात् सिंहासनं यदा। द्विगुणं वाह
येत् पण्यमन्यथैकगुणं भवेत्॥ द्वि
गुणं पण्यं दातव्यन्तेन प्रापयेत्॥ मि
त्रसिंहासनं पार्थ यदारोहति भूपति
। तदासिंहासनं नाम सर्वं नयति त
द्दलम्॥ यदासिंहासनं वसुं राजा-
षष्ठपदाश्रितः। तदाघातेपि हन्तव्यो
बलेनापि सुरक्षितः॥ *॥ विद्यमा
नेन्नृपेयत्र स्वकीयेच नृपत्रयम्। प्रा
प्नोतिच तदातस्य चतुराजी यदाभवे
त्॥ नृपेणैव नृपश्चा चतुराजीय
दाभवेत्। द्विगुणंवाहयेत् पण्यमन्य
थैकगुणं भवेत्॥ स्वपदस्थ यदा रा
जा राजानं हन्ति पार्थिव। चतुरङ्गे
तदाभूपवाहयेच्च चतुर्गुणम्॥ यदा
सिंहासने काले चतुराजी समुत्थि
ता। चतुराजीभवत्येव नतु सिंहास
नं नृप॥ अचेदवीजम्। उभयथाजये
पिपरसिंहासनाधिकारात् परराज
वधेशौर्य्याधिक्यनिष्कण्टकत्वदर्शना-
त् क्रीडायामपि तथा कल्प्यते॥
*॥ राजद्वय यदा हस्ते आत्मनोरा
शिसंस्थिते। परेणासन्नतत्त्वैको बले
नाप्यपहार्य्यते॥ राजद्वय यदाहस्ते
न स्यादन्यकरेपर। तदा राजाहि
राजानं घातेपि न हनिष्यति॥ नृ
पाकृष्टे यदा राजा गमिष्यति युधिष्ठि
र। घाताघातेपि हन्तव्यो राजा नत्र
नरर्षभ.॥ *॥ कोणं राजपदं त्य-
क्त्वा वटिकाल्लय यदाव्रजेत्। वटीन
येत् पदनाम तदाकोष्ठ वशं चषट्॥
यदितत्र भवेत् पार्थ चतुराजी चषट्
पदम्। तदापिच चतुराजीभवत्ये
वनसंशय.॥ यदाते षट्पदे सिद्धे रा
ज्ञावा हस्तिना तथा। षट्पद न भवे
त्तस्य अवश्य शृणु पार्थिव॥ सप्तमे
कोष्ठकेयास्याद्वटिकादृश्यकेन वै। तदा
न्योन्यञ्च हन्तव्यं सुखाय दुर्वलं बलम्
॥ त्रिवटीकस्य कौन्तेय पुरुषस्य क-
दाचन। षट्पद न भवत्येव इतिगो
तमभाषितम्॥ *॥ नौकैकावटि
का यत्र विद्यते खेलने यदि। माढाव
टीति विख्याता पदवत्स न दृष्यति॥
माढा घात्यापद राजपदं कोणपदञ्च
तत्। *। हस्ते राज्ञेव बलनास्ति काक
काष्ठ तदाभवेत्॥ वदन्ति राघवाः
सर्वे तस्य न क्षोभयाजयौ। *। प्रा
र्थिते पञ्चमेरात्रि स्तत्र वक्ष्याम्यषट्प
दे॥ अष्टौ चक्षुरास्तदा राजन् चलितव्या
चालितं पदम्। द्विरावृत्त्या गतौ त
स्मादन्यात् परबलजयी॥ पार्थसिंहा
सने काले काककाष्ठ यदाभवेत्। सिं
हासन भवत्येव काककाष्ठ न भण्य
ते॥ *॥ उपविष्टश्च यत् स्थाने त-

स्योपरि चतुष्टये । नौकाचतुष्टयं यत्र क्रियते यस्य नौकया ॥ नौकाचतुष्टयं तच्च वृहन्नौकेति भण्यते । * । नक्षत्रे दैकदा राजन् गजस्याभिमुखं गजम् ॥ यदि कुर्वीत धर्मेश पापग्रस्तो भविष्यति । स्थानाभावे यदा पार्थैश्च स्तिन हस्तिसम्मुखम् ॥ करिष्यति महाराज जितिगौतमभाषितम् । प्राप्ते गजद्वये राजन् हन्त्योवामतो गजः ॥ इति तिथ्यादितत्त्वे चतुरङ्गक्रीडनम् ॥

चतुरङ्गा । स्त्री । घोटिकावृक्षे ॥

चतुरङ्गिणी । स्त्री । सेनायाम् ॥ रथगजहयपदातयः चत्वारि अङ्गानि यस्याम् सा ॥

चतुरङ्गुलः । पु । धनवृक्षे । इति प्रसिद्धे आरग्वधवृक्षे ॥ चतस्रोऽङ्गुलयः प्रमाणमस्य पर्वणस्तद्योगात् इत्योपि ॥

चतुरब्दा । स्त्री । चतुर्वर्षवयस्कगवि ॥ चत्वारोऽब्दा वय प्रमाणमस्याः । आर्हीयष्ठक् । अध्यर्द्धेति लुक् ॥

चतुरम्लम् । न । कोलदाडिमहृक्षाम्लाऽम्लवेतसे ॥ अम्लवेतसवृक्षाम्ल ट ट जम्बीरनिम्बुकैः । चतुरम्लमिदं प्रोक्तग्रन्थे भावप्रकाशके ॥

चतुरस्रः । त्रि । चतुष्कोणे ॥ समाश्चतुर्थाऽष्टमस्थाने । समाश्चतुर्थनिधने चतुरस्र संज्ञे ॥ चतस्रोऽस्रयोऽस्य । सुप्रातसुश्वेत्यन्तो निपातित ॥

चतुरात्मा । पु । परमात्मनि परमेश्वरे ॥ सर्गादिषु पृथग्विभूतयश्चतस्र आत्मान सन्त्यस्य । यथा । ब्रह्मा दक्षादय कालस्तथैवाखिलजन्तव । विभूतयो हरे रेता जगत सृष्टिहेतव ॥ विष्णुर्मन्वादय कालः सर्वभूतानि च द्विज । स्थितेर्निमित्तभूतस्य विष्णो रेता विभूतय ॥ रुद्रः कालोऽन्तकाद्याश्च समस्ताश्चैव जन्तव । चतुर्द्धा प्रलया यैता जनार्दनविभूतय ॥ इति विष्णुपुराणम् ॥ यद्वा । रागद्वेषादिरहितत्वात् चतुरं मन आत्मा यस्य स । मनोबुद्ध्यऽहङ्कार चित्तचतुष्टयात्मत्वाद्वा ॥

चतुराननः । पु । ब्रह्मणि । अजयोनौ ॥ यथा । तस्यां स चाम्भोरुहकर्णिकायामवस्थितो लोकमपश्यमानः । परिक्रमन् व्योम्नि विवृत्तनेत्रश्चत्वारि लेभेऽनुदिशं मुखानीति । श्रीभागवतम् । चत्वारि आननान्यस्य ॥

चतुरूषणम् । न । कणामूलसहिते त्र्यूषणे ॥ त्र्यूषणं सकणामूलं कथितं चतुरूषणम् । व्योषस्येव गुणाः प्रोक्ता अधिकाश्चतुरूषणे ॥

चतुर्गति । पु । नारायणे ॥ चतुर्गा

माश्रमाणां वर्णानाञ्च यथोक्तकारि
णां गतिराश्रय ॥ कच्छपे ॥

चतुर्ज्जातकम् । न । त्वगेलापत्रकना
गकेसरेषु ॥ एतच्चरोचन रूक्ष ती
क्ष्णोष्णं मुखगन्धहृत् । लघुपित्ता
ऽग्निकृद्वर्ण्यं कफवात विषापहम् ॥

चतुर्थ । त्रि । तुरीये ॥ चतुर्णां पूरणं
। तस्यपूरणेडट् तस्यथुगागम ॥

चतुर्थक । पु । चतुर्थेह्नि चतुर्थकइति
लक्षणलक्षिते विषमज्वरविशेषे ॥
चतुर्थेह्निभव' । कालप्रयोजनाद्रोग
इति कन् । दिनद्वयन्त्वतिक्रम्य य स्या
तसहिचतुर्थकइत्युक्तो । चतुर्थक
स्तुर्थेह्नीत्यथागमदिनग्रहणत्वाख्या
स्येयम् ॥

चतुर्थांश । त्रि । चतुर्भागैकभागे ।
तुरीये । पादे ॥

चतुर्थिका । स्त्री । पलपरिमाणे ॥

चतुर्थी । स्त्री । चन्द्रस्यचतुर्थकलाक्रि
यारूपायां तिथौ ॥ तत्रजातस्यफल
यथा । स्वपुत्रमित्रप्रमदाप्रमोदी घ्र
ताभिलाषी कृपया समेत । विवा
दशीलो विजयी विवादे भवेच्चतु
र्थीप्रभव कठोर इति ॥ डेभ्याम्भ्य
सइति सिके ॥ टित्वान्ङीप् ॥

चतुर्द्दन्त । पु । ऐरावते । इन्द्रस्यगजे॥
चत्वारोदन्ता. अस्य ॥

चतुर्द्दश । त्रि । चतुर्द्दशानापूरणे ॥
तस्यपूरणेडट् ॥

चतुर्द्दश । त्रि । सङ्ख्याविशेषे १४ ॥
सङ्ख्येये ॥ चत्वारश्च दशच ॥ चतु
रधिकादशवा ॥

चतुर्द्दशभुवनम् । न । पञ्चीकृतेभ्यो
भूतेभ्योजातानि भर्भुव स्वर्म्महोज
नस्तप सत्यमित्येतन्नामकानि उ
पर्य्युपरिविद्यमानानि सप्त । अतल
वितलसुतलरसातलतलातलमहा
तलपातालनामकानि अधोऽधोवि
द्यमानानिच सप्त । मिलित्वाचतुर्द्द
शभुवनानि भवन्ति ॥ चतुर्द्दशाना
भुवनानासमाहार ॥

चतुर्द्दशलोकम् । न । चतुर्द्दशभुवने ॥

चतुर्द्दशी । स्त्री । चन्द्रस्य चतुर्द्दशकला
क्रियारूपायातिथौ ॥ तत्रोत्पन्नस्य
फलम् । यथा । विरुद्धशाल पुरुष
सरोष श्चौर कठोर परवञ्चकश्च
। पराम्नभोक्ता परदारचित्त स्तुर्द्द
शीचे ज्जननस्य कालेइति ॥ टित्वा
न्ङीप् ॥

चतुर्द्दोल । पु । न । चतुर्द्दोलइति च
न्दोलइतिचख्याते द्विपदवाह्ये यान
विशेषे ॥ यथा । राज्ञोयद् द्विपद
यान विशेषाख्यमलविदु । चतुर्भि
रुह्यतेयत्तुचतुर्द्दोलंतदुच्यते इति

॥ अन्नभोज । चतुर्भिर्वाहकै र्द
ण्डै षड्भि कुम्भै सुसंस्थितै. । स्त
म्भैरष्टाभिरुदित चतुर्द्दोलमनुत्तम
म् ॥ * ॥ तद्भेदा जयकल्याणवीर
सिंहा यथाक्रमम् । चतुर्विधानां भू
पानां चतुर्द्दोला' प्रकाशिता' ॥ षि
ड्हस्तसम्मितायामो द्विहस्तपरिणाह
वान् । हस्तद्वयोन्नत. प्रोक्तश्चतुर्द्दो
लोजयाख्यया ॥ १ ॥ चतुर्हस्ताय
तो यस्तु सार्द्धहस्तस्तदन्यथा । चतु
र्द्दोल'समाख्यात'कल्याण स्तावदुन्न
त ॥ २ ॥ पञ्चहस्तायतो यस्तु त्रिह
स्तपरिणाहवान् । तावदेवोन्नतोवी
र श्चतुर्द्दोलउदाहृतः ॥ ३ ॥ आया
मपरिणाहाभ्यांचतुर्हस्तमितोहि य
। चतुर्द्दोलोह्ययंसिंहस्तदर्द्धेनोन्नत
शुभ. ॥ ४ ॥ * ॥ सर्वोऽयद्विविध' प्रो
क्त सच्छदिश्चापिनिश्छदि । आ
द्य:समरयात्रासु पर'केलिघनात्यये
॥ * ॥ सर्वेषामेवकाष्ठानां दण्ड'
स्याद्जवारण: । चन्दनेनैवघटना
सर्वेषामुपयुज्यते ॥ लोमजंसर्ववस्त्रे
षु कनकं सर्वधातुषु । कुम्भश्च पद्म
कोषश्चगिरिश्चेति यथाक्रमम् ॥ चै
देशानांमहीन्द्राणां चतुर्द्दोलेषु वि-
न्यसेत् ॥ दर्पणश्चार्द्धचन्द्रश्च हंस:
केकी शुको गज. । अश्व: सिंहश्चत



स्याग्रेआदित्यादिदशोत्तरान् ॥ म
णिनियमस्तुदण्डवत् ॥ * ॥ रक्त
शुक्लश्च पीतश्च कृष्ण श्चित्र स्तथाह
रि' । नील कपिल इत्युक्त' पता-
कानान्तुसङ्ग्रह. ॥ चतुर्द्दोल: सपता
क शुभयानमितिस्मृत ॥ * ॥ मु-
क्तास्तवकै र्दशभि र्युक्त' स्याद्राजके
शानाम् । चामरदण्डैर्दशभिर्दिग्ज
यिनांचतुर्द्दोल. ॥ चाषपक्षस्य पुच्छ
श्चेत् सर्वोपरि परिन्यसेत् । याचासि
द्धिरयंनाम्ना चतुर्द्दोलो महीभुजाम्
॥ स्तम्भच्छादरहितो निश्छदिकश्च
श्चतुर्द्दोल । मानं पूर्ववत् ॥ * ॥
स पुन द्विविध' प्रोक्त. सध्वजश्चाथ
निर्ध्वज । ध्वजान्षड्भ न्यस्यन्ति
षड्गविजयैषिण ॥ तेषां मानन्तु-
चत्वार' स्वामिहस्तै कसम्मिता: ।
कोणेषु पश्चा दग्रेच हस्तद्वयमितौ
ध्वजौ ॥ सुवर्णं रजतं युग्मं विविधा
नांमहीभुजाम् । मणिचामरकुम्भा
नांखड्गादीनां विनिश्चय ॥ चतुर्द्दो
लध्वजौराज्ञां विज्ञेयो नवदण्डवत्
। निर्ध्वजेच चतुर्द्दोले मानमन्यत-
मशृणु ॥ आयामपरिणाहाभ्यां च
तुर्हस्तमितोहि य' । विजयोनाम
विख्यात श्चतुर्द्दोलो महीभुजाम् ॥
विजयो मङ्गलो भव्यो विलक्षो वैक

चतुर्दो

रुक्ति । त्रिविधाना महीन्द्राणा या नन्नयमुदाहृतम् ॥ * ॥ अष्टाभिर्हस्ता तेयस्तु अष्टदोलमुशन्ति च । सोपा नहितयश्चात्र विन्नेर्यश्रिखिनिर्मितम् ॥ * ॥ भोजस्तु । अष्टाभिर्वा हैकैर्ह ण्डै षड्भिस्तु दशभिर्घटै । स्तम्भै स्तु दशभिर्नेय महदोल महीभुजा म् ॥ तद्भेदा जयकल्याणवीरसिंहा यथा क्रमम् । चतुर्विधानाभूपाना महदोला प्रकीर्त्तिता ॥ षड्भिर्ह स्तैर्मितायाम परिणाहश्चतुर्भुज । चतुर्हस्तोन्नतो राज्ञामष्टदोलं जय विदु ॥ आयामपरिणाहाभ्या पञ्चह स्तमितोच्छ्रिय । कल्याणाख्योष्टदो लोय चतुर्हस्तमितोन्नति ॥ सप्तह स्तायत कार्यप्रवरे पञ्चहस्तक । प ञ्चहस्तोन्नतो वीराख्याष्टदोलो मही भुजाम् ॥ आयामपरिणाहाभ्यामष्ट हस्तमितोच्छ्रिय । सिंहनामाष्टदो- लोयं विज्ञेय षड्भुजोन्नत. ॥ * ॥ सर्वोयद्विविध प्रोक्तः सच्छदिश्चापि निश्छदि । काष्ठवत्सघटादीनां म णीनांचामरस्यच ॥ चतुर्दोलवदुक्ते योनियमोन्योपिद्धरिभि. । पूर्ववन्नि श्छदेमेन ध्वजमानमिहोच्यते ॥ दशध्वजा लेषु चाष्टौ स्वामिहस्तक योन्नता. । पश्चा दशध्वजैराज्ञस्तु

चतुर्भ

हस्तमितोन्नतो ॥ मणिचामरपञ्चा णां निर्णयोन्निश्चताकवत् । निश्छद स्याष्टदोलोय. शिविकोतिसगद्यते ॥ मणिकुम्भमुखादीनां नियमोनवद ण्डवत् । इत्यष्टदोलकथनम् ॥ * ॥ एवद्वादशषोडशवि शतिदोलादि- का कार्या: ॥ मानसार्द्धद्विगुणितं सार्द्धत्रिगुणितं युक्तमेतेषाम् । विं शतिदोलात् परतो भोजमतेसम्म वेद्यानम् ॥ ज्ञानंवह्ननुभोज्यंबहुगु णमेतज्जगाद वै व्यास. ॥ * ॥ भवि ष्योत्तरेपि । यदुक्तदेयद् यानंते नमानेनयोन्नप । स्वयान कुरुते- द्दिव्यसचिरं सुखमश्नुते ॥ स्वयोमयु क्तयानस्थो भोगमाप्नोतिमानव. । परयौगिकयानस्थ. क्लेशमाप्नोतिपु ष्कलम् ॥ योदम्भादथवाऽज्ञानाचा न प्रकुरुते ऽन्यथा । तस्यैतानिविन श्यन्ति आयुर्विशायशोधनम् ॥ प्रधा नयानमाश्रित्यनियमोय समाश्रि त । नाप्रधानेनिर्णयोस्ति तल्लिङ्गन्तु मनोज्ञता ॥ इतियुक्तिकल्पतरु ॥

चतुर्धा । अ । चतुष्प्रकारे ॥ यथा । च तुर्धाविभजति । सख्याया विधायधा ॥ एकराशिं चतुर्धाकुरु । अनाधि करणविचालेचेतिधा ॥

चतुर्भद्रम् । न । सकलेषु धर्मार्थकाम

मोक्षेषु ॥ चत्वारिभद्राणिश्रेष्ठान्यच वृन्दे ॥ यदा । चत्वारि भद्राणि । दिक्सङ्ख्ये स ञ्ज्ञायामितिसमास.॥

चतुर्भुज. । पु । विष्णौ । माधवे ॥ त्रि । भुजचतुष्टयविशिष्टे ॥ चत्वारोभुजायस्य ॥ यद्वा । भुङ्क्ते भुनक्ति इति भुज' । चतुर्णां धर्मार्थकाममोक्षाणां भुज ॥

चतुर्मुख' । पु । ब्रह्मणि । परमेष्ठिनि ॥ औषधविषये रसविशेषे ॥ यथा । रसगन्धकलौहाभ्रं सम कृताङ्घ्रि हेमच । सर्वं खल्लतले क्षिप्त्वा कन्यारसविमर्द्दितम् ॥ एरण्डपत्रै रावेष्ट्य धान्यराशौ दिनत्रयम् । संस्थाप्य ततउद्धृत्य सर्वरोगेषुयोजयेत् ॥ एतद्रसायनवरं त्रिफलामधुसंयुतम् । तच्चाग्निवर्द्ध नादैः क्षीणपित्तनाशनम् ॥ क्षयमेकादशविधं कास पञ्चविध तथा । कुष्ठमष्टादशविध पाण्डुरोगान् प्रमेहकान् ॥ शूल श्वासञ्च हिक्काञ्च मन्दाग्निं चाम्लपित्तकम् । व्रणान सर्वा नाशयेत विसर्पं विद्रधिं तथा ॥ अपस्मारग्रहोन्मादान् सर्वाशांसित्वगामयान् । क्रमेणसेवितं हन्ति दृष्टमिन्द्राग्निर्यथा ॥ पौष्टिक वल्यमायुष्यं पुत्रप्रसवकारणम् । चतुर्मुखेणदेवेन कृष्णात्रयेणसूचितम् ॥ इतिभैषज्यरत्नावली ॥



चत्वारिमुखानि अस्य ॥

चतुर्मूर्त्ति । पु । विष्णौ ॥ चतस्रोमूर्त्तयो विराट्सूत्राव्याकृततुरीयात्मानोऽस्य ॥ सिता पीता रक्ताकृष्णा चेति चतस्रो मूर्त्तयोऽस्य वा ॥

चतुर्युगम् । न । चतुर्षु सत्यत्रेताद्वापरकलिसंज्ञकेषु ॥ चतुर्णां युगानां समाहार' । पात्रा दित्वात् स्त्रीत्वम॥

चतुर्वक्त्र' । पु । ब्रह्मणि । वेधसि ॥

चतुर्वर्ग । पु । धर्मार्थकाममोक्षेषु मिलितेषु ॥ चतुर्णां वर्गः समूहः ॥

चतुर्विद' । पुं । चातुर्वैद्ये । चतुर्वेदवेत्तरि ॥

चतुर्विधशरीरम् । न । जरायुजाण्डजस्वेदजोद्भिज्जाख्येषु ॥ चतुर्विधशरीराणि धृत्वा मुक्त्वा सहस्रशः । सुकृतात् मानवोभूत्वा ज्ञानी चेन्मोक्षमाप्नुयात् ॥

चतुर्बीजम् । न । मेथिकादिचतुष्टये ॥ मेथिका चन्द्रसूरश्च कालाजाजी यवानिका । एतच्चतुष्टययुक्तं चतुर्बीजमितिस्मृतम् ॥ तच्चूर्णं भक्षितं नित्यं निहन्तिपवनामयान् । अजीर्णं शूलमाध्मानं पार्श्वशूलं कटिव्यथाम् इतिभावप्रकाश. ॥

चतुर्व्यूह. । पु । विष्णौ । नारायणे ॥

सृष्ट्यादिकार्यार्थं चत्वारो व्यूहा विभागा वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धसंज्ञा मूर्त्तयो यस्य । यथा । व्यूह्यात्मानं चतुर्द्धा वै वासुदेवादिमूर्त्तिभिः । सृष्ट्यादीन् प्रकरोत्येष विश्रुतात्मा जनार्द्दन इति व्यासवचनम् ॥ तथाच मार्कण्डेयपुराणे मूलकारणं वासुदेवाख्यं व्यूहमुक्तोक्तम् । द्वितीया पृथिवीं मूर्द्ध्ना शेषाख्या धारयत्यधः । तामसी सा समाख्याता तिर्य्यक्त्वसमुपाश्रिता ॥ तृतीया कर्म कुरुते प्रजापालनतत्परा । सत्त्वोद्रिक्ता तु सा ज्ञेया धर्मसंस्थानकारिणी ॥ चतुर्थी जलमध्यस्था शेते पन्नगतल्पगा । रजस्तस्या गुणः सर्गं सा करोति सदैवहीत्यादि ॥ शरीरपुरुषश्छन्दःपुरुषो वेदपुरुषो महापुरुष इति बह्वृचोपनिषदुक्ताश्चत्वारः पुरुषा व्यूहा यस्येति वा ॥ न । साङ्ख्येमोक्षशास्त्रे ॥ तत्र हि हेयं हानं हेयहेतुर्हानोपायश्चेति चत्वारो व्यूहाः प्रतिपाद्या भवन्ति । तत्र त्रिविधं दुःखं हेयम् । तदत्यन्तनिवृत्तिर्हानम् । प्रकृतिपुरुषसंयोगद्वाराचाविवेको हेयहेतुः । विवेकख्यातिस्तु हानोपाय इति ॥ ॥ चिकित्साशास्त्रे ॥ तत्र च रोग आरोग्यं रोगनिदानं भैषज्यमिति चत्वारो व्यूहस्तेनोक्ताः ॥



चतुर्हायणी । स्त्री । चतुर्वर्षीया गवि ॥ चत्वारो हायना यस्याः । दामहायनेति ङीप् । त्रिचतुर्भ्यां हायनस्येति णत्वम् ॥ त्रि । अन्यत्र ॥

चतुष्कम् । न । चतुस्तम्भमण्डपे । चौखम्भा इति भाषा ॥ अश्वस्य गतिविशेषे ॥

चतुष्की । स्त्री । मशकहर्य्याम् । मसहरी इति भाषा ॥ पुष्करिणी विशेषे ॥

चतुष्टयम् । त्रि । चतुरवयवसमुदाये ॥ यथा चतुष्टयी शब्दानां प्रवृत्तिरिति । शब्दानामर्थेषु या प्रवृत्तिः सा प्रवृत्तिनिमित्तभेदात् प्रकारचतुष्टयवतीत्यर्थः । प्रकारभेदश्च यथा । जातिशब्दो गुणशब्दः क्रियाशब्दो यदृच्छाशब्दश्चेति ॥ चत्वारोऽवयवा यस्य । सङ्ख्याया अवयवेतयप् । रेफस्य विसर्गस्तस्य च कृते ह्रस्वात्तादाविति मूर्द्धन्यः ॥ केन्द्रे ॥

चतुष्पत्री । स्त्री । सुनिषण्णके । चौपत्ती शाक इति भाषा ॥ चाङ्गेरीसदृश. पत्रैस्तु दृश्यत इति स्मृत । शाकोऽखाऽन्वितो देशे चतुष्पत्रीति चोच्यते ॥ क्षुद्रपाषाणभेदिनि ॥

चतुष्पथः । पु । ब्राह्मणे ॥ न । चतुर्मार्गसङ्गमे । शृङ्गाटके ॥ चतुर्णां पथां

समाहार । तद्धितार्थेतिसमास । कृकपूरितिसमासान्त । इदुदुपध स्येतिषत्वम् । पद्य.सख्येतिक्लीबत्वम् । चत्वार पन्थानोयत्रवा ॥

चतुष्पद । पु । गवादिपशौ ॥ करणवि शेषे ॥ तत्रजातस्यफल यथा । चतुष्प दभवोमर्त्यः सदाचारविवर्जित. । स्वल्पवित्त स्त्रीयादेश्चतुष्पादधना न्वितइति ॥ राशिविशेषे । मेषवृष सिंहेष । धनुषोन्त्यार्द्धे । मकरस्यपूर्वा र्द्धे ॥ स्त्रीयांकरणभेदेचेतिहेम' ॥ चत्वारि पदानि पादा अस्य ॥

चतुष्पदी । स्त्री । पद्ये । चौपदीइतिचौ पई इतिच भाषा ॥ चत्वारः पादा. अस्या । सङ्ख्यासुपूर्वस्येतिपादस्या न्तलोपे पादोन्यतरस्यामितिङीपि भत्वात् पादःपदिति पदादेश. ॥

चतुष्पर्णी । स्त्री । क्षुद्राम्लिकायाम् ॥

चतुष्पथा । स्त्री । नागवल्लायाम् ॥

चतुष्पाठी । स्त्री । चौपाड इति भाषा प्रसिद्धे छात्राणामध्ययनस्थले ॥ च तुर्णांवेदानांपाठोयस्याम् ॥

चतुष्पाणि. । पु । शतधामनि । विष्णौ ॥ चत्वार. पाणयोयस्य ॥ त्रि । चतु र्हस्तान्विते ॥

चतुष्पात्-द् । पुं । गवादिपशौ ॥ चत्वा र' पादाअस्य । संख्यासुपूर्वस्येतिपा दस्यान्तलोप ॥

चतुष्पुण्ड्र । पु । भिण्डाद्रक्षे ॥

चतुस्समम् । न । चतु समे ॥

चतुस्त्रिंशत् । स्त्री । चतुरधिकायां त्रिं शति । चौतीस इति भाषा ॥

चतुस्त्रिंशज्जातक । पु । बुद्धविशेषे ॥

चतूराजी' । स्त्री । चत रङ्गक्रीडाकर्ग तक्रीडाविशेषे ॥

चत्वरम् । न । स्थण्डिले । यागार्थसंस्कृ तभूमौ ॥ अङ्गने ॥ नानाजनावस्था नदेशे । चौतरा इति भाषा ॥ पथा श्ले षे । चतसृणां रथ्यानां सम्बन्धे ॥ गृहा दहिरङ्गने ॥ चत्यते । चते० । छ्वमृसृ अचतिभ्य.ष्वरच् ॥ चतन्त्यस्मिन्वा ॥

चत्वारिंशत् । स्त्री । चालीसइतिप्रसि द्धे सङ्ख्याविशेषे ॥ सङ्ख्येये ॥ च त्वारोदशतःपरिमाणमस्य । पङ्क्तिविं शतित्रिंशच्चत्वारिंशदितिनिपातना- त्प्रकृतेश्चत्वारिंभ्भावः शत्प्रत्ययश्च' ॥

चत्वाल: । पु । होमकुण्डे ॥ दर्भे ॥ च तति । चते० । स्याचतिमृजेरितिवा लञ् ॥

चन । अ । असकलार्थे ॥ चनति । च नशब्दे । पचाद्यच् ॥ अप्यर्थे ॥

चन० । न । भक्ते ॥ चाय्यते । चायृपू जानिशामनयोः । चायतेरन्नेह्रस्व श्चेत्यसुन् प्रत्ययस्तुट् च ॥

चन्द । पु । विधौ ॥ शशी चन्दो हिमद्युतिरिति शब्दार्णवः । चन्दति । चदि आह्लादे । पचाद्यच् ॥

चन्दक । पुं । चादा इति गौडेषु प्रसिद्धे मत्स्यविशेषे ॥

चन्दन । पु । न । मलयजे । गन्धसारे ॥ चन्दनं शीतलं रूक्षं तिक्तमाह्लादनं लघु । श्रमशोषविषश्लेष्मतृष्णापित्तास्रदाहनुत् ॥ श्रेष्ठस्यास्य लक्षणं यथा । स्वादे तिक्तं कषे पीतं छेदे रक्तं तनौ सितम् । ग्रन्थिकोटरसंयुक्तं चन्दनं श्रेष्ठमुच्यते इति ॥ चन्दनानि च सर्वाणि सदृशानि रसादिभिः । गन्धेन तु विशेषोक्ति पूर्वं श्रेष्ठतमं गुणे ॥ रक्तचन्दने ॥ यथा । कषायपानयोर्योज्यं चन्दनं रक्तचन्दनमिति ॥ अपिच । कषायलेपयोः शोध्यं चन्दनं रक्तचन्दनमिति ॥ पु । वानरप्रभेदे ॥ न । औषधीभेदे । भद्रकाल्याम् ॥ चन्दयति । चदि आह्लादने । णय न्त । ल्युट् । बहुलमन्यत्रापीति युच्वा ॥

चन्दनगोपी । स्त्री । शारिवाविशेषे ॥

चन्दनधेनु । स्त्री । पतिपुत्रवन्मृतनार्युद्देश्यकोत्सृष्टाया चन्दनाङ्कितसवत्साया गोर्दाने ॥ यथा । जीवद्भर्तृतुया नारी पुत्रिणी म्रियते यदि । सवत्सा मङ्कितां धेनुमाचार्याय प्रदापयेत् ॥ पतिपुत्रवती नारी म्रियते या प्रशस्तयोः । दर्शनं चोत्सृजेत् पुत्रः पिता यावच्च जीवतीति ॥

चन्दनपुष्पम् । न । लवङ्गे ॥

चन्दनशारिवा । स्त्री । शारिवाविशेषे ॥

चन्दनसार । पुं । वज्रक्षारे ॥

चन्दना । स्त्री । शारिवाविशेषे ॥

चन्दनाचल । पुं । मलयपर्वते ॥

चन्दनादिः । पुं । पित्तोपशमनाय चन्दनादिसवासनद्रव्येषु ॥ यथा । चन्दनञ्च तथोशीरं कर्पूरो गन्धमाकुची । एलार्कचूर्णगोक्षुरा सर्वे ते चन्दनाद्य इति ॥

चन्दनाद्रि । पु । मलयपर्वते ॥

चन्दनी । स्त्री । नदीविशेषे ॥

चन्दनीया । स्त्री । गोरोचनायाम् ॥

चन्दिर । पुं । हस्तिनि ॥ चन्द्रे ॥ चन्दति । चदि० । इषिमदिमुदीत्यादिना किरच् ॥

चन्द्रः । पु । चाँद इति प्रसिद्धे हिमांशौ । चन्द्रमसि । सुधांशौ ॥ कर्पूरे ॥ काम्पिल्ले ॥ स्वर्णे ॥ वारिणि ॥ काम्ये । सुन्दरे ॥ मेचके । वर्हचन्द्रके ॥ रक्तरजते । शोणमुक्ताफले ॥ चि । आह्लादजनकद्रव्ये ॥ न । स्वर्णे ॥ चुक्रं ॥ वर्णवृत्तविशेषे ॥ यथा । द्वि

जवरगणयुग मुपधाय परिकलयक र मथनगणयुगलमिह गन्धयुगमपि विरच । फणिन्द्रपतिभणितमिति-चन्द्रमिदमितिश्रुत सकलकविकु लहृदयमोदकरमवतनुत ॥ यथा ।अनुपहतकुसुमरसतुल्यमिदमधर दल मम्लतमयवचन मिदमाखिवि फलयसिचल । यदपि यदुरमणपद-मौग्रमुनिहृदि लुठति तदपि तवरति वलितमेत्यवनतटमटतीति ॥ घ यमाचस्य दयम॥ ऽ ॥प्रभेदे ॥ च न्द्यति आह्लादयति सकलं जगत् । चदि° । स्फायितश्वीतिरक् ॥ पु । द्वीपविशेषे ॥ कीरके ॥ मृगशिरो नक्षत्रे ॥

चन्द्रक. । पु । मेचके । वर्हचन्द्रके । मयूरपिच्छस्थचन्द्राकृतौ ॥ चन्द्र इव प्रतिकृति । इवे प्रतिकृताविति कन् ॥ नखे ॥ चाँदमाच् इति गौडेषु प्रसिद्धे मत्स्ये ॥ न । सितमरिचे । शिग्रुबीजे ॥

चन्द्रकला । स्त्री । चन्द्रस्य षोडशे भागे ॥ मृगचर्म्ये ॥ वाद्यामत्स्ये ॥

चन्द्रकान्त । पु । चन्द्रमणौ । चन्द्रोपले ॥ कैरवे ॥ न । कैरवे ॥ श्रीखण्डचन्दने ॥ चन्द्र. कान्तो यस्य ॥

चन्द्रकान्ता । स्त्री । निशायाम् ॥ ज्योत्स्नायाम् ॥ चन्द्रयोषायाम् ॥ चन्द्रः कान्तो यस्या ॥

चन्द्रकान्ति । न । रजते । रूप्ये ॥

चन्द्रकालानलम् । न । मैथुनिकानां चक्रविशेषे ॥

चन्द्रकावान् । पुं । } मयूरे ॥ मतुप् ॥
चन्द्रकी । पु । } इन् ॥

चन्द्रकुण्डः । पु । कामरूपस्थे सरोविशेषे ॥

चन्द्रकूट । पुं । कामरूपस्थे पर्वतविशेषे ॥

चन्द्रक्षय । पुं । अमायाम् ॥

चन्द्रगुप्तः । पु । श्रीभागवतप्रसिद्धे नृपे ॥

चन्द्रगृहम । न । कर्कराशौ ॥

चन्द्रगोलस्था. । पु । भूम्नि । दिव्यपितृषु । स्वधाभुक्षु ॥ चन्द्रगोले तिष्ठन्ति । सुपिस्थ इतिक ॥

चन्द्रगोलिका । स्त्री । ज्योत्स्नायाम् ॥

चन्द्रचञ्चल । पु । खलेशमत्स्ये ॥

चन्द्रचञ्चला । स्त्री । चन्द्रकमत्स्ये ॥

चन्द्रचार । पु । चन्द्रविषयकज्ञाने ॥ तत्रादौ येरवेरुपरि चन्द्रमसमिच्छन्ति तान् प्रत्याह । नित्यमधस्थस्येन्दोर्भाभि र्भानो' सितभवत्यर्द्धम् । स्वच्छाययान्यदसित कुम्भस्येवातपस्थस्य ॥ अस्यप्रत्यवबाधां मन्यमानस्य । सलिलमयेशशिनि रवेर्दी

थितयोमूर्च्छितासमोनैशम् । च
पयन्ति दर्पणोदरविहितादूव मन्दि
रस्यान्त. ॥ शशिनः पश्चिमदिग्भागा
त् सितवृद्धि किमित्युपलभ्यते इ
त्याह । त्यजतोर्कतलंशशिन पश्चा
दवलम्बते यथाशोक्लम् । दिनकर
वशात्तथेन्दो प्रकाशतेध प्रभृत्युद
य ॥ प्रतिदिन कथंचन्द्रगोलशुक्ल
द्धिर्भवति तदर्थमाह । प्रतिदिवसमे
वमर्कात् स्थानविशेषेण शैक्लय परि
वृद्धि । भवति शशिनोऽपराह्णेप
श्चाद्भागे घटस्येव ॥ चन्द्रस्य नक्षत्र
गमनेन शुभाशुभत्वमाह । ऐन्द्रस्य
शीतकिरणो मूलाषाढाद्वयस्यचाया
त । याम्येनवीजजलचरकाननघा
वक्लिभयदश्च ॥ दक्षिणपार्श्वेनगत
शशी विशाखानुराधयो पापः । म
ध्येनतु प्रशस्त पितृदेवविशाखयो
श्चापि ॥ चन्द्रस्यनक्षत्रयोगमाह । ष
डनागतानिपैाष्णात् द्वादशरौद्राश्च
मध्ययोगीनि । ज्येष्ठाद्यानि नवर्क्षा
णडुपतिनातीत्ययुज्यन्ते ॥ चन्द्रम
स संस्थानानि दश भवन्ति । यथा ।
नैा लाङ्गल दुष्टलाङ्गलं समो दण्ड
कार्मुक युग पार्श्वशय्याऽऽवर्जितंकु
ण्डाख्यमिति । अथैषां संस्थाना
ना लक्षण फलञ्च क्रमेणाह । उन्न



त मीषच्छृङ्गं तस्यैास्थानेविशाल
ता चोक्ता । नाविकपीडातस्मिन्
भवति शिवंसर्वलोकस्य ॥ १ ॥ अ
र्द्धोन्नतेचलाङ्गलमितिपीडातदुप-
जीविनां तस्मिन । प्रीतिश्च निर्नि
मित्तं मनुजपतीनां सुभिक्षञ्च ॥२
॥ दक्षिणविषाणमर्द्धोन्नतंयदादुष्ट
लाङ्गलाख्यंतत् । पाण्ड्यनरेश्वरनि-
धनकृदुद्योगकरंबलानाञ्च ॥ ३ ॥ स
मशशिनि सुभिक्षक्षेमवृष्टय. प्रथम
दिवससदृशा स्युः । ४ । दण्डवदुदि
तेपीडा गवान्नपश्चोग्रदण्डोच ॥ ५
॥ कार्मुकरूपे युद्धानियत्रतुज्यातते।
जयस्तेषाम् । ६ । स्थानंयुगमितिया
म्योत्तरायतंभूमिकम्पाय ॥ १२ ॥
७ ॥ युगमेवयाम्यकोट्यांकिञ्चित्तुङ्ग
स पार्श्वशायीत । विनिहन्तिस र्थ
वाहान् वृष्टेश्चविनिग्रहंकुर्यात् ॥ ८
॥ अभ्युच्छ्रायादेकयदिशशिनोऽवा
क्शृङ्गभवेच्छृङ्गम् । आवर्जितमित्य
सुभिक्षकारितद्गोधनस्यापि ॥ ९ ॥
अव्युच्छिन्नारेख समन्ततोमण्डलेच
कुण्डाख्यम् । अस्मिनमाण्डलिका
ना स्थानत्यागोनरपतीनाम् ॥ १५
। १० ॥ साकान्यलक्षणमाह । प्रो
क्तस्थान भावा दुदगुच्च क्षेमवृद्धिवृ
ष्टिकर । दक्षिणतुङ्गश्चन्द्रो दुर्भिक्ष

चन्द्रचा

भयायमिर्दिष्टं ॥ शृङ्गेणैकेनेन्दु वि
लीनमथवाप्यवाङ्मुखंशृङ्गम् । सम्पू
र्णञ्चाभिनवदृष्टैको जीविताद्भ्र
श्येत् ॥ १७॥ चन्द्रमसोरूपाणिसफ
लान्याह । संस्थानविधि कथितो रू
पाण्यस्याङ्गवन्ति चन्द्रमसः । स्वल्पो
दुर्भिक्षकरो महान् सुभिक्षावह
प्रोक्तः ॥ मध्यतनु वंज्राख्य' क्षुद्भ
यद सम्भ्रमायराज्ञाञ्च । चन्द्रोमृदङ्ग
रूप क्षेमसुभिक्षावहोभवति ॥
श्रेयोविशालमूर्त्ति र्नरपतिलक्ष्मीवि
वृद्धयेचन्द्र् । स्थूल सुभिक्षकारीप्रिय
धान्यकरस्तुतनुमूर्त्ति ॥ २० ॥ अथ
चन्द्रस्य कुजादिभिस्ताराग्रहैः शृङ्गे-
भिन्नेफलमाह । प्रत्यन्तान्कुन्नृपा
श्चहन्त्युडुपति शृङ्गेकुजेनाहते शस्त्र
क्षुद्भयकृद्यमेन शशिजेनावृष्टिदुर्भि
क्षकृत् । श्रेष्ठान्हन्तिन्नृपान्महेन्द्र
गुरुणा शुक्रेणचाल्पान्नृपान् शुक्रे
याप्यमिदफलग्रहकृतकृष्णेयथोक्ता
गमम् ॥ शुक्रभिन्नविम्बस्यचन्द्रमस
फलमाह । भिन्न सितेन मगधान्
यवनान्पुलिन्दान् नेपालभृङ्गिमरुक
च्छसुराष्ट्रमद्रान् । पाञ्चालकैकय
कुलूतकपौरुषादान् हन्यादुशीनर
जनानपिसप्तमासान् ॥ जीवभिन्न-
स्याह । गान्धारसौवीरकसिन्धुकीरा

चन्द्रचा

न् धान्यानि शैलान्द्रविडाधिपांश्च
। द्विजांश्च मासान्दश शीतरश्मि'
सन्तापयेद्वाक्पतिनाविभिन्न ॥ सौ
मभिन्नस्याह । उद्युक्तान्सहवाहनैर्न
रपतीस्त्रैगर्त्तकान्मालवान् कौलि
न्दान् गणपुङ्गवानथशिवीनयोध्य
कान्पार्थिवान् । हन्यात कौरव
मत्स्यशुक्त्यधिपतीन् राजन्यमुख्या-
नपि प्रालेयांशुरसृग्ग्रहेतनुगतेषण्
मासमर्यादया ॥ शनिभिन्नस्याह ।
यौधेयान् सचिवान् सकौरवान् प्रा
गीशा नथ चार्जुनायनान् । हन्या-
दर्कजभिन्नमण्डलः शीतांशु र्दशमा
सपीडया ॥ बुधभिन्नस्याह । मगधा
न्मथुरांश्चपीडयेत वेन्नायाश्चतट
शशाङ्कज । अपरत्रकृतयुगं वदे च्छ-
दिभित्त्वाशशिनविनिर्गतः ॥ केतुना
भिन्नस्याह । क्षेमारोग्यसुभिक्षविना
शी शीतांशु शिखिनायदिभिन्न'।
कुर्यादायुधजीविविनाशं चौराणा-
मधिकेनचपीडाम् ॥ २७ ॥ ग्रहण
कालेउल्काहतस्य चन्द्रस्य फलमाह ।
उल्कयायदाशशी ग्रस्तएवहन्यते ॥
हन्यतेतदान्नृपो यस्यजन्मनिस्थित'
॥ चन्द्रमसोवर्णलक्षणमाह । भस्म
निभ'परुषो ऽरुणमूर्त्ति.शीतकर -
किरणै:परिहीन'। श्यामतनु'स्फुटि

त. स्फुरणोवाचुट्टमरामयचौरभया
त् ॥ प्रालेयकुन्दकुमुदस्फटिकावदा
तो यत्नाद्दिवाद्रिसुतया परिमृज्य च
न्द्रः । एवं कृते निशि भविष्यति
मे शिवाय योऽदृश्यत स भविताजग
त शिवाय ॥ अथपक्षद्वौ चान्द्रा
साख्ये च शुभाशुभमाह । शुक्लेपक्षेस
मस्तेष वृद्धिं व्रजत्यनयातिवृद्धिं प्रजा
सु । क्षीणेऽपि निस्तु क्षयतः क्षयतायां कृ
ष्णे समेतत्फलव्यत्ययेन ॥ यदिन्दु
मुदस्याप्यचारगौर क्षितिशिनियमा
त् प्रयमेक्रियते तथा । अविकृतगति
सखण्डांशु योगी भवति त्वया विजया
य शीतरश्मिः ॥ ३२ ॥ इति वाराह्यां
चतुर्थोध्यायः ॥ ४ ॥

चन्द्रदारा । पु । भू० । अश्विन्यादिन
क्षत्रेषु ॥ चन्द्रस्यदाराः ॥

चन्द्रनामा । पु । कर्पूरे ॥ चन्द्रस्यना-
मान्येव नामान्यस्य ॥

चन्द्रपुष्पा । स्त्री । श्वेतकण्टकार्याम् ॥

चन्द्रप्रभ । पु । वृक्षविशेषे ॥

चन्द्रप्रभा । स्त्री । ज्योत्स्नायाम् ॥ च
न्द्रस्य प्रभा ॥ बाकुच्याम् ॥ औषध
विशेषे ॥ अस्याः सुखबोध । कृमिरि
पुदहनव्योषत्रिफलामरदारुचव्यभू
निम्बम् । मागधिमूल मुस्त शटि
वचामाक्षिकञ्चैव ॥ लवणक्षारनि



माद्युगकुस्तुम्बुरु गजकणामिविषा
॥ कर्षांशकान्येव समानि कुर्यात् पला
न्यष्टाश्मजतो विदध्यात् । निश्च
शुद्धपुरस्य धीमान् पलद्वयं चौक्षर
जस्तथैव ॥ सिताचतुष्कं पलमत्र वं
श्यानि कुम्भकुम्भशिस्तु न्धियुक्तम् । च
न्द्रप्रभेयं गुटिकाप्रयोज्या चार्शांसि
निर्णाशयते मत्ये व ॥ भगन्दरपाण्डुर
कामलाश्च निर्यांष्टवङ्के कुरुते च दीप्ति
म् । हन्त्यामयान् पित्तकफानि
लोत्थान् नाडीगते मर्मगते व्रणे च ॥
ग्रन्थ्यर्बुदे विद्रधिराजयक्ष्मयोर्मेहे
भगाख्ये प्रबले च योज्या । शुक्रक्षये
चाश्मरिमूत्रकृच्छ्रे शुक्रप्रवाहे प्युद
रामये च ॥ भक्तस्य पूर्वं सततं प्रयो
ज्या तक्रानुपानं त्वथमस्तुपानम् । आ
जोरसो जाङ्गलजो रसो वा पयोऽथ
वा शीतजलानुपानम् ॥ बलेन नाग
स्तुरगो जवेन दृष्ट्या सुपर्णः श्रवणे वरा
ह ॥ वलीपलितनिर्मुक्तो वृद्धोऽपि
तरुणायते ॥ न पानभोज्ये परिहार्य
मस्ति न शीतवातातपमैथुनेषु । श
म्भुं समभ्यर्च्य कृतप्रसादेनाप्ता वटी
चन्द्रमसः प्रसादादिति ॥ कर्पूरके ।
कपूर इति भाषा ॥

चन्द्रभस्म । न । कर्पूरे ॥

चन्द्रभाग । पुं । पर्वतविशेषे ॥ विभक्त

श्चन्द्रमायस्मात् तस्मिन् पर्वतसत्त मे। अतोदेवाश्चन्द्रभागं नामाचक्रुः पुरागिरिमितिकालिकापुराणम् ॥

चन्द्रभागा। स्त्री। कश्मीरदेशप्रसिद्धे नदीविशेषे ॥ चन्द्रभागयोः पर्वतयोरियम्। तत्प्रभवत्वात्। तस्येदमित्यण्। टिड्ढेतिङीपप्राप्त चन्द्रभागाद्वा नद्यामिति वक्तव्यादिगवाहुत्वात्भवति। संज्ञापूर्वकत्वाद्वृद्ध्यभावः ॥

चन्द्रभागी। स्त्री। चन्द्रभागायाम् ॥ बह्वादिभ्यश्चेतिङीष ॥

चन्द्रभूति। न। रूप्ये ॥

चन्द्रमणि। पु। चन्द्रकान्तमणौ ॥

चन्द्रमण्डलम्। न। चन्द्रबिम्बे ॥ चन्द्रपरिवेशे ॥

चन्द्रमल्ली। स्त्री। अष्टापदाम् ॥

चन्द्रमाः। पु। विधौ। चन्द्रे ॥ चन्द्रं कर्पूरं साहश्येन माति तुलयति। माङ्माने। चन्द्रेमोडिच्चेत्यसि ॥ चन्द्रमाह्लादमिमीते निर्मिमीतेइतिवा ॥ यद्वा। चन्द्रं रजतमस्तत्वतद्दिव मीयते। चन्द्रइतिवामीयते इति दासीभारादित्वात्पादने चरदतः ॥

चन्द्रमौलि। पु। रेरिहाणे। शिवे ॥

चन्द्ररेणु,। पु। काव्यचौरे ॥

चन्द्रर्क्षम्। न। मृगशिरायाम् ॥

चन्द्रला। स्त्री। कर्णाटदेशप्रसिद्धायामम्बायाम् ॥ तत्स्थाने ॥

चन्द्रलेखा। स्त्री। वाकुच्याम् ॥ शशिकलायाम् ॥ अतिशक्वरीसंज्ञकेपञ्चदशाक्षरावृत्तिविशेषे ॥ यथा। म्रौ म्रौ यौ चेद्भवेता ससाष्टकैश्चन्द्रलेखा ॥ यथा। विच्छेदे ते मुरारे पाण्डुप्रकाशाङ्गयष्टी म्लानच्छायंदुकूलं मन्दाक्षतेविभ्रतीसा। राधामोदप्रागर्भणीनायका चन्द्रलेखा किञ्चासौ त्वां स्मरन्ती धत्ते भृशं जीवयेम मिति ॥

चन्द्रलोहकम्। न। रूप्ये ॥

चन्द्रवंशः। पु। चन्द्रसन्ताने ॥

चन्द्रवर्त्म। न। जगतीसंज्ञकेद्वादशाक्षरावृत्तिविशेषे ॥ यथा। चन्द्रवर्त्म निगदन्ति रनभसैः ॥ यथा। चन्द्रवर्त्मपिहितं घनतिमिरैः राजवर्त्मरहितं जनगमनैः। इष्टवर्त्मतदलं कुरु सरसे कुञ्जवर्त्मनि हरिस्तवकुतुकीति ॥

चन्द्रवल्लरी। स्त्री। सोमवल्ल्याम् ॥

चन्द्रवल्ली। स्त्री। प्रसारण्याम् ॥ माधवीलतायाम् ॥

चन्द्रवशा। स्त्री। भारतवर्षस्य नदीविशेषे ॥

चन्द्रवाला । स्त्री । स्थूलैलायाम् । बहु लायाम् ॥ चन्द्रस्य कर्पूरस्य वालेव कर्पूरगन्धित्वात् ॥

चन्द्रविहङ्गम । पुं । बकपक्षिणि ॥

चन्द्रव्रतम् । न । चान्द्रायणे ॥

चन्द्रशाला । स्त्री । } ज्योत्स्नायाम् ॥ गृहोपरिगृहे । शिरोगृहे ॥
चन्द्रशालिका । स्त्री । }

चन्द्रशुक्ल । पु । जम्बुद्वीपोपद्वीपविशेषे ॥

चन्द्रशूरम् । न । चंद्रसुर हालौं इति ख्यातौषधौ । चर्मकन्याम् । पशुमेहनकारिकायाम् । चन्द्रहूरे ॥

चन्द्रशेखर । पु । ईश्वरे । शिवे ॥ गिरिविशेषे । यथा । विशेषत कलियुगे वसामि चन्द्रशेखरे । इतिशिववाक्यम् ॥ चन्द्रशेखरोऽस्य ॥ पौष्यराज पुत्रे करवीरपुरन्टपे ॥ षोडशध्रुवकान्तर्गते नवमध्रुवके ॥ चट्टलक्षेभैरवविशेषे ॥

चन्द्रसंज्ञ । पु । कर्पूरे ॥ चन्द्रस्य संज्ञा यस्य ॥

चन्द्रसम्भव । पु । बुधे ॥ चन्द्रात् सम्भवो यस्य ॥

चन्द्रसम्भवा । स्त्री । सूक्ष्मैलायाम् ॥ चन्द्रात् सम्भवोयस्या ॥

चन्द्रहूरम् । न । चन्द्रशूरे । चंदसुर इति भाषा ॥ चन्द्रहूरं हितं हिक्कावातश्लेष्मातिसारिणाम् । असृग्वातगदद्वेषि बलपुष्टिविवर्द्धनम् ॥

चन्द्रहास । पु । असिमात्रे ॥ दशग्रीवकरवाले ॥ चन्द्रइवहास प्रभाऽस्य ॥ चन्द्रं हसतिवा द्युतिमत्त्वात् । हसेर्हसने । कर्मण्यण् ॥ न । रौप्ये ॥

चन्द्रहासा । स्त्री । गुडूच्याम् ॥ सोमवल्लिकाप्रभेदे ॥

चन्द्रा । स्त्री । एलायाम् ॥ विताने ॥

चन्द्रातप । पु । विताने । उल्लोचे । चंदोवा इतिभाषा ॥ ज्योत्स्नायाम् ॥

चन्द्रापीड । पु । शिवे ॥ चन्द्र आपीड शिरोभूषणमस्य ॥

चन्द्रावली । स्त्री । गोपीविशेषे ॥ यथा । राधाचन्द्रावलीमुख्या प्रोक्तानित्यप्रियाव्रजे । कृष्णवन्नित्यसौन्दर्यवैदग्ध्यादिगुणाश्रया इत्युज्ज्वलनीलमणि ॥

चन्द्रिका । स्त्री । कौमुद्याम् । ज्योत्स्नायाम् ॥ चन्द्रोऽस्त्यस्या' । ठन् ॥ ॥ चन्द्रकायतीतितुन इत्त्वाभावप्रसङ्गात् ॥ चन्द्रमाचष्टे चन्द्रयति । तत्करोतीतिण्यन्तात्ण्वुल् वा ॥ स्थूलैलायाम् ॥ चन्द्रकमत्स्ये ॥ कर्णस्फोटायाम् ॥ मल्लिकायाम् ॥ श्वेतकण्टकार्याम् ॥ मेथिकायाम् ॥ इत्यमे-

वायाम् ॥ चन्द्रशूरे ॥ अतिजगती संज्ञकेचयोदशाक्षरावृत्तिविशेषे ॥ यथा । ननततगुरुभिश्चन्द्रिकाश्वर्त्तुभिः । यथा । शरदमलतरुचश्चन्द्रिकाञ्चालिते दिनकरतनयातीरदेशे हरिः । विहरति रभसाद्वल्लवीभि सम त्रिदिवयुवतिभि कोऽपिदेवो यथा ॥ हरिश्चन्द्रपुरवासिन्यामप्सायाम् ॥

चन्द्रिकाम्बुजम् । न । सितोत्पले ॥

चन्द्रिकाद्राव । पु । चन्द्रकान्तमणौ ॥

चन्द्रिकापायी । पु । चकोरपक्षिणि ॥

चन्द्री । स्त्री । वाकुच्याम् ॥

चन्द्रेष्टा । स्त्री । उत्पलिन्याम् ॥

चन्द्रोदयः । पुं । शशिप्रकाशे ॥ उल्लोचे ॥ मकरध्वजाख्यरससिन्दूरे ॥ यथा च । पलं मृदुस्वर्णदलं रसेन्द्र पलाष्टकं षोडशगन्धकस्य । शोणै सुकार्पासभवै प्रसूनै सर्वं विमर्द्याथ कुमारिकाद्भिः ॥ तत्काचकुम्भे निहितं सुगाढे मृत्कर्पटैस्तद्दिवसत्रयञ्च । पचेत् क्रमाग्नौ सिकताख्ययन्त्रे ततो रज पल्लवरागरम्यम् ॥ निगृह्य चैतस्य पलं पलानि चत्वारि कर्पूररजस्तथैव । जातीफलं शोषणमिन्द्र पुष्प कस्तूरिकाया इह शाणएक ॥ *॥ चन्द्रोदयोऽयंकथितसुभाषी भुक्तो हि वल्लीदलमध्यवर्त्ती । मदोन्मदानां प्रमदाशतानां गर्वाधिकत्वं श्लथयत्यकाण्डे ॥ घृतं घनीभूतमतीव दुग्ध मृदूनि मांसानि समस्तकानि । माषान्नपिष्टानि भवन्ति पथ्यान्यानन्ददायीन्यपराणि चात्र ॥ ॥ वलीपलितनाशनस्तनुभृतां वयःस्तम्भनः समस्तगदखण्डन प्रचुररोगपञ्चाननः । गृहेषु रसराजयं भवति यस्य चन्द्रोदयः स पञ्चशरदर्पितो मृगदृशां भवेद् दुर्लभः ॥ इति सारकौमुदी सुखबोधश्चेतिराधाकान्तः ॥ चन्द्रस्य चन्द्रइवबा उदयो यस्य ॥

चन्द्रोदया । स्त्री । नेत्ररोगस्यौषधविशेषे ॥ यथा । हरीतकी वचा कुष्ठ पिप्पली मरिचानि च । बिभीतकस्य मज्जा च शङ्खनाभि मंन शिला ॥ सर्वमेतत्समं कृत्वा छागीक्षीरेणपेषयेत् । * । नाशयेत् तिमिरं कण्डु पटलान्यर्बुदानि च ॥ अधिकानि च मांसानि यश्चरात्रौ न पश्यति । अपि द्विवार्षिकं पुष्पमासेनैकेन साधयेत ॥ वर्त्तिश्चन्द्रोदयानाम्ना तथा दृष्टि प्रसादनी ॥ इतिचक्रपाणिदत्त ॥

चन्द्रोपलः । पु । चन्द्रकान्तमणौ ॥

चपलः । पु । पारदे ॥ मीने ॥ चोर

के ॥ प्रस्तरविशेषे ॥ त्त्वे ॥ राजमाषे ॥ चपनम् । चपसान्त्वने । ल्युट्र एरच् । चपंलाति । ला० । क ॥ न । ङीषे ॥ क्रियाविशेषणत्वादद्रव्ये वर्त्तमानक्लीवम् ॥ त्रि । तरले ॥ चले । क्षणिके ॥ विकले ॥ दुर्विनीते ॥ चपति । चप० । दृषा० कल ॥ चोपति । चुपमन्दायांगतौ । चुपेरत्वोपधाया इति कलमत्यय ॥ दोषमनिश्चित्यवधवन्धनादे कर्त्तरि । चिकुरे ॥

चपला । स्त्री । कमलायाम् । श्रियि ॥ विद्युति ॥ पुश्चल्याम् ॥ पिप्पल्याम् ॥ विजयायाम् ॥ मदिरायाम् ॥ जिह्वायाम् ॥ आर्याप्रभेदे ॥ यथा । द्लयो र्द्वितीयतुर्येगणौ जकारौ तु चपलासा । यथा । चपलानचेत् कदाचि न्तृणाभवे ङ्क्तिभावना कृष्णे । धर्मार्थकाममोक्षा स्तदाकरस्थान सन्देह ॥ चपलाट्टाप् ॥

चपेट । पु । विस्तृताङ्गुलिपाणौ । प्रतले । थाप् चपेटा इतिच भाषा ॥ चपति । चप० । अच । एटति । इट गतौ । अच् । चपस्यासौ इटस्य ॥

चपेटा । स्त्री । चपेटे । प्रहस्ते ॥ खण्डकोपाध्याय शिष्याय चपेटां ददातीतिभाष्यम् ॥ टाप् ॥

चपेटिका । स्त्री । चपेटायाम् ॥ चपेटैव । स्वा० क । प्रत्ययस्था दितीत्वम् ॥

चपेटी । स्त्री । भाद्रशुक्लषष्ठ्याम् ॥ भाद्रे चपेटीविख्यातेतिस्कन्दपुराणम् ॥

चमत्कार । पु । विस्मये । चित्तविस्ताररूपे । डमरौ ॥ लोकातीतार्थीकनेन किमेतदितिज्ञानधाराजननेन चित्तस्य दीर्घप्रायत्वचित्तविस्तार इत्यर्थं । दृष्टहेतुभ्यो ऽसम्भविज्ञानेन हेत्वन्तरानुसन्धाने मनोव्यापार एवचित्तविस्तार इत्यपरे ॥ अपामार्गे ॥ चमत् करणम् । कृ ञ० । घञ् ॥

चमर । पु । मृगविशेषे । व्यजन्याम् ॥ यस्यश्वेतवालैर्दवराजादिव्यजन क्रियते सचमरद्विधाकृतिर्भवति ॥ दैत्यविशेषे ॥ न । चामरे ॥ चमति चम्यते वा अनेन वा । चमुअदने । अश्लिकमिभ्रमिचमीत्यरश्चित् ॥

चमरपुच्छ । पु । कोकडे ॥ न । चामरे ॥

चमरिक । पु । कोविदारवृक्षे । रक्तकाञ्चनारे ॥ चमरमस्यास्ति । ठन् ॥

चमरी । स्त्री । मञ्जर्याम् ॥ मृगीभेदे । दीर्घलवायाम् । गिरिप्रियायाम् ॥

चमस । पु । न । दारुजेयज्ञपात्रवि-

शेषे ॥ सोमपानपात्रे ॥ पु । पर्पटे ॥ पिष्टविशेषे ॥ लड्डुके ॥ चमन्त्यस्मिन् । चम्यते भक्ष्यते सोमोऽस्मिन्वा । चमु० । अत्यविचमीत्यसच् ॥

चमसी । स्त्री । मुद्गमसूरादिपिष्टे ॥ चूर्णीयच्छक्ष्माषाणां चमसी साऽभिधीयते ॥ चम्यते । चमु० । असच् । गौरादित्वात् ङीष् ॥

चमीकर । पु । कृतस्वराख्य आकरविशेषे ॥

चमू । स्त्री । सेनामात्रे ॥ सेनाविशेषे । तत्रेभा ७२९ । रथा ७२९ । अश्वा २१८७ । पदातय ३६४५ । समस्तसङ्ख्यया ७२९० नवत्यधिकशतद्वयाधिकसप्तसहस्रम्भवति ॥ चमतिश्नून् परैश्चम्यतेवा । चमु अदने । कृषिचमितनिधनिसर्जिखर्जिभ्यऊरिष्यू ॥

चमूचर । पु । सैनिके ॥ चरेष्ट ॥

चमूजघनम् । न । सेनापश्चाद्भागे ॥

चमूरु । पु । मृगविशेषे ॥ चमति । चमु० । खर्जादित्वादूर । पृ० असत्त्वम् ॥ यद्वा । चमूजरूयस्य ॥

चम्प । न । कोविदारवृक्षे ॥

चम्पक । पु । चम्पा इति प्रसिद्धे वृक्षे । हेमपुष्पके । दीपपुष्पे ॥ चम्पक कटुकस्तिक्तः कषायो मधुरो हिमः । विषकृमिहर कृच्छ्रकफवातास्रपित्तजित ॥ चम्पयति चम्प्यते वा । चपिगत्याम् । ण्वुल् ॥ पनसकोषगाशके ॥ न । चाँपाकला इति गौडभाषाप्रसिद्धे कदलीफले ॥ चम्पकवातपित्तघ्न गुरुवीर्यकरं तथा । अतिशीत रसे पाके मधुरं कथितं बुधैरित्यस्यगुणा ॥ चम्पकस्यपुष्पे ॥ सुहृत्प्राप्तिसिद्धौ ॥ सायथा । न्यायेन स्वयपरीक्षितमप्यर्थं तावन्नश्रद्धते यावद्गुरुशिष्यसब्रह्मचारिभि सह न सवाद्यते अत सुहृदां गुरुशिष्यसब्रह्मचारिणां सवादकानां प्राप्ति सुहृत्प्राप्ति सासिद्धिस्तुर्याचम्पकमुच्यते इति साङ्ख्यविद ॥

चम्पककलिका । स्त्री । चम्पककोरके । गन्धमोदिन्याम् ॥

चम्पकमाला । स्त्री । चम्पकपुष्पैर्निर्मितायां मालायाम् ॥ चम्पकली इति प्रसिद्धे स्त्रीणां कण्ठाभरणे ॥ वर्णवृत्तेषु पङ्क्तिच्छन्दोविभेदे ॥ यथा । पादविराजन्नूपुरयुग्मा कुण्डलशोभासङ्गिसुवर्णा । शङ्खवतीहारदयपूर्णा चम्पकमालाभातिसुवर्णा ॥ यथा । आलिकुलभ्रष्टाहमधन्या हन्तभवद्धन्यारविकन्या । नन्दकुमारो निर्गतशङ्कः सम्प्रतिभावी कोपि-

कलङ्क इति ॥

चम्पकचतुर्दशी । स्त्री । ज्येष्ठशुक्लचतुर्दश्याम् ॥

चम्पकरम्भा । स्त्री । सुवर्णकदल्याम् ॥

चम्पकारण्यम् । न । तीर्थविशेषे ॥

चम्पकुन्द । पु । चापकुडा इतिगौडे सुप्रसिद्धे मत्स्यविशेषे ॥

चम्पकोष । पु । पनसे ॥

चम्पा । स्त्री । कर्णराजस्य भार्यायाम् ॥ तस्यैवपुर्याम् । अधुना भागलपुर इति यस्यप्रसिद्धिरितिराधाकान्त ॥ तीर्थविशेषे ॥

चम्पाधिप । पु । कर्णभूपे ॥

चम्पापुरी । स्त्री । चम्पायां नगर्याम् ॥

चम्पारण्यम् । न । विदेहदेशसमीपस्थे विपिने ॥

चम्पालु । पु । पनसे ॥

चम्पावती । स्त्री । कर्णपुर्याम् ॥

चम्पूः । स्त्री । काव्यविशेषे ॥ तल्लक्षणं यथा । गद्यपद्यमयीवाणीचम्पूरित्यभिधीयते । इत्यलङ्कारचन्द्रिका ॥

चम्पेश । पु । कर्णाख्यन्टपे ॥

चम्पोपलक्षित । पु । अङ्गदेशे ॥ तद्देशस्थे पुम्भूम्नि ॥

चमेली । स्त्री । स्वनाम्ना प्रसिद्धे पुष्पविशेषे । सुमनायाम् ॥

चय । पु । समूहे ॥ वप्रे । प्राकारमूलबन्धने ॥ यदुपरिप्राकारो निरूप्यते प्राकाराधारवेदिकेतियावत् । तथा चार्थशास्त्रम् । खातमुद्धृतमृद्‌दावप्रकारयेत् तस्योपरिप्राकारमिति । पगार इतिगौडभाषा ॥ समाहृतौ ॥ परिखोद्धृतमृत्स्तूपे ॥ चीयते । चिञ्चयने । कर्मण्यरच् ॥ प्राकारे ॥ पीठे ॥ इतिहेमचन्द्र ॥

चयनम् । न । चिननाइतिख्याते रचनाविशेषे । इष्टकादीनामूर्द्धाधोदेशनिवेशने ॥ चिञो ल्युट् ॥

चर । पु । अक्षद्यूतप्रभेदे ॥ भौमे ॥ जङ्गमे । चले ॥ चले ॥ चारे । गोपनेन राष्ट्रादे शुभाशुभादिज्ञानार्थं राज्ञा नियुक्त पुरुषे । परतत्त्वज्ञानार्थं भ्रमणकर्त्तरि । यथार्हवर्णो । प्रणिधौ ॥ चरति । चरगतौ । पचाद्यच् ॥ कपर्दके ॥ मेषकर्कटतुलामकरलग्नेषु ॥ न । नक्षत्रविशेषे । वातादितिहरिर्मीणि चन्द्रारुश्च चरचलम् ॥

चरक । पु । चारे ॥ पर्पटे ॥ चक्रकरे । भिक्षौ ॥ मुनिग्रन्थविशेषयो । वैद्यशास्त्रप्रवर्त्तकेमुनौ ॥ तत्कृतेतन्नामके ग्रन्थे ॥ चरति । चर० । शिल्पिसञ्ज्ञयोरपूर्वस्यापीति वुन् ॥

चरट । पु । खञ्जनपक्षिणि ॥

चरण । पु । न । बह्वृचादौ । वेदैकदेशे ॥ शाखाध्येतरि ॥ मूले ॥ गोत्रे ॥ पदे । पादे ॥ न । भ्रमणे ॥ भक्षणे ॥ शीले । आचारे ॥ चरन्त्यनेन । चर० । करणेतिल्युट् ॥

चरणगत । त्रि । प्रगते ॥

चरणग्रन्थि । पु । गुल्फे ॥

चरणयोधी । पु । कुक्कुटे ॥

चरणव्यूह । पु । वेदव्यासकृते चतुर्वेदविवरणग्रन्थे ॥

चरणामिषम् । न । चरणमांसे ॥ चरणानामामिषम् । मुण्डस्य विधिना पाच्यं चरणन्तुप्रलेहितम् । चरण वा तद्वल्य रुच्य पित्तकर गुरु ॥

चरणायुध । पु । कुक्कुटे ॥ चरणमायुध मस्य ॥

चरम । त्रि । अन्ते । अवसाने । प्रान्ते ॥ पश्चिमे ॥ चरति । चर० । चरेश्चेत्यमच् । प्रथमचरमेतिसर्वनामत्वात् पक्षेजस शी । चरमे चरमा ॥

चरमक्ष्माभृत् । पु । अस्ताचले ॥ चरमश्चासौक्ष्माभृच्च ॥

चरमतीर्थकृत् । पु । वर्द्धमानाख्यार्हद्देवे ॥

चरमाचल । पु । अस्ताचले ॥ चरमश्चासावचलश्च ॥

चरमाद्रि । पु । अस्ताचले ॥

चराचरम् । न । विष्टपे । जगति ॥ त्रि । इङ्गे ॥ जङ्गमाजङ्गमे ॥ दृष्टे ॥ पु । कपर्दके ॥ चरति । चर० । चरिचलीतिद्वित्वादि ॥

चरि । पु । पशौ ॥ चरति । चर० । खनिकष्यज्यसीत्यादिना इप्रत्यय ॥

चरितम् । न । अनुष्ठिते ॥ चरित्रे ॥ सञ्चारे ॥ व्रतकर्मणि ॥

चरितार्थ । त्रि । प्राप्तप्रयोजने ॥

चरित्रम् । न । स्वभावे ॥ चेष्टिते ॥ चर्यतेऽनेन । चर० । अर्तिलूधूसूखनसहचरइत्र ॥

चरिष्णु । त्रि । जङ्गमे ॥ चरणशील । चरगतौ । अलङ्कृञितीष्णुच् ॥

चरु । पु । हव्यान्ने । हव्यपाके ॥ टीकायामितिख्याते भाण्डे ॥ चर्यते भक्ष्यतेदेवैः । चरन्तिभक्षयन्तिदेवा इममिति वा । चरगतौ भक्षणेच । भृमृशीतृचरीत्यु ॥ अनवस्नावितान्तरूष्मपाक ओदनश्चरुरितियाज्ञिका ॥ मीमांसकैरपि त्रिवृच्चरुरैधिकरणे ओदनपरत्वमेव चरुशब्दस्याभ्युपगतम् ॥ उगणादिभ्योयदितिसूत्रेकैयटस्तु स्थालीवाची चरुशब्द' तात्स्थ्यात् तद्धने भाक्तइत्याह । बिम्बप्रकाशेतु चरुर्भाण्डेचहव्यान्ने इत्यनेकार्थेनोक्ता ॥

चक्त्रका । पु । चित्रापूपे ॥

चर्च्चरी । स्त्री । गीतभेदे ॥ अन्वजुके श्रे ॥ चर्च्चरीगीतभेदेचकेशभित् करशब्दयोरितिरुद्र ॥ हर्षक्रीडाया मितिसुभूति । कापटिकानासादर वचने तौर्यत्रिकेचेत्यन्ये । वसन्तसम यक्रीडायामित्येके ॥ चर्भर्थ्याम् । साटोपवाक्ये ॥ वर्णवृत्तविशेषे ॥ यथा । हारयुक्तसुवर्णकङ्कणपाणिशङ्ख विराजिता पादनूपुरसङ्गता सुपयो धरद्वयभूषिता । शोभिता वलयेन पिङ्गलपन्नगाधिपवर्णिता चर्चरी त रुणीव चेतसि चाकसीतिसुसङ्गता ॥ यथा । कोकिलाकलकूजितनशृणो सि सम्प्रतिसादरम् मन्यसे तिमिरा पहारि सुधाकरं नसुधाकरम् । दूर मुज्झसि भूषणं विकलासि चन्दन मारुते कस्य पुण्यफलेन सुन्दरि म न्दिरं न सुखायते इति ॥ चर्च्यते । चर्चपरिभाषणभर्त्सनयो । बाहु लकात् अरन् । गौ० ङीष् ॥

चर्च्चरीक । पु । महाकाले ॥ केशविन्यासे ॥ शाके ॥ चर्च्यते चर्च अध्ययने । पर्फ० इकन्प्रत्ययान्तोनिपातित ॥

चर्च्चा । स्त्री । चिन्तायाम् ॥ विचारणायाम् ॥ स्थासके । चार्चिक्ये । चन्दनादिनादेहविलेपने । चर्चना इति भाषा ॥ चर्च्चिकायाम् । दुर्गायाम् ॥ चर्चयनम् । चर्च अध्ययने । चुरादि ण्यन्ताद्भावे चिन्तिपूजिकथिकुम्बिच र्चश्चेत्यङ् । चर्चनं वा ॥

चर्च्चिका । स्त्री । दुर्गायाम् ॥ चर्च्चायाम् ॥ चर्च्चैव । स्वा० क ॥

चर्च्चित । त्रि । दिग्धे । लिप्ते । चन्दनादिनाकृतलेपने । चर्चा चर्चलिया इतिचभाषा ॥ चर्चासञ्जाताऽस्य । तारकादित्वादितच् ॥

चर्प्पट । पु । चपेटे ॥ पर्पटे ॥ स्फार विपुले । चिपिटे । चिपटा इति भाषा ॥

चर्प्पटा । स्त्री । भाद्रशुक्लषष्ठ्याम् । च मेल्याम् ॥

चर्प्पटी । स्त्री । पिष्टकविशेषे । मो ल्याम् ॥

चर्भट । पु । इर्वारौ ॥

चर्भटी । स्त्री । चर्चर्याम् । हर्षक्रीडा याचि । साटोपवाक्ये ॥

चर्म्मकषा । स्त्री । गन्धद्रव्यविशेषे । सप्तलायाम् । भरिफेनायाम् ॥ मा सरोहिण्याम् ॥ चर्मणः कषा ॥

चर्म्मकार । पु । चमार इतिभाषाप्र सिद्धे कारावरे । पादूकृति । च मडालर्या तीवराज्जाते । इतिपराशर पद्धति ॥ चर्मकरोति । डुकृञ्० ।

कर्मख्यम् ॥

चर्म्मकारी । स्त्री । चर्मकषायामोषधौ ॥

चर्म्मकीलम् । न । अर्श प्रभेदे ॥ व्यानोग्रहीत्वाश्लेष्माख करोत्यर्शस्त्वचोवहि । कीलोपमस्थिरखर चर्म कीलन्तु तद्विदु ॥

चर्म्मकृत् । पु । चर्मकारे ॥

चर्म्मचटका । स्त्री । अजिनपत्रायाम् । जतुकायाम् । चाम्चिरैया इति भाषा ॥

चर्म्मचटी । स्त्री । गृहमाचिकायाम् । चर्मचटकायाम् ॥

चर्म्मचित्रकम् । न । श्वेतकुष्ठे ॥

चर्म्मजम् । न । रुधिरे ॥ रोमणि ॥

चर्म्मण्वती । स्त्री । चम्बल इतिभाषा प्रसिद्धे नदीविशेषे॥ चर्मास्त्यस्याम् । मतुप् । आसन्दीवदिति चर्मणो नलोपाभावोवत्वञ्च निपात्यते ॥

चर्म्मतरङ्ग । पु । वलौ । जरयाश्लथच र्मणि ॥

चर्म्मदण्ड । पु । कशायाम् । कोरडा इति भाषा ॥

चर्म्मदूषिका । स्त्री । कोठरोगे ॥

चर्म्मद्रुम । पु । भूर्जवृक्षे ॥

चर्म्म । न । चामइति प्रसिद्धे त्वगिन्द्रिये । असृग्धरायाम् । कृत्तौ । अजिने । रोमभूमौ ॥ ढालफरी इतिचम-सिद्धे फलके ॥ अस्यलक्षणं यथा । शरीरावरक मस्त्र चमइत्यभिधीयते । तत् पुनर्द्विविध काष्ठचर्म सम्भवभेदत ॥ शरीरावरकत्वञ्च लघुता दृढता तथा । दुर्भेद्यतेतिकथितश्च र्मणा गुणसङ्ग्रह ॥ स्वल्पता गुरुता चैवमृदुता सुखभेद्यता । विरूपवर्णताचेति चर्मणा दोषसङ्ग्रह ॥ सितोरक्तस्तथापीत कृष्णइत्यभिमब्दित । ब्रह्मादिजातिभेदेन चर्मणां वर्णनिर्णय ॥ चित्रवर्णस्तु सर्वेषां सर्वदैवोपपद्यते इतिभोज ॥ चरति चर्यते वा ऽनेनवा॥ चर० । मनिन् ॥

चर्म्मनासिका । स्त्री । ताडन्याम् ॥

चर्म्मपत्रा । स्त्री । चर्मचट्याम ॥

चर्म्मपादुका । स्त्री । उपानहि ॥

चर्म्मपुट । पु । } इतिसञ्ज्ञके चर्म
चर्म्मपुटक । पु । } पात्रविशेषे ॥

चर्म्मप्रभेदिका । स्त्री । आरायाम् । चर्मवेधास्त्रप्रभेदे ॥ चर्मणा प्रभेदिका ॥

चर्म्मप्रसेविका । स्त्री । भस्त्रायाम् । अग्निसन्दीपनार्थं चर्मनिर्मिते यन्त्रे । भाती इतिभाषा ॥ चर्मणा प्रसीव्यते । षिवुतन्तुसन्ताने । कृ० वुन् ॥ सञ्ज्ञायामितिण्वुल् वा ॥

चर्म्ममुण्डा । स्त्री । दुर्गायाम् ॥

चर्म्ममुण्डिका । स्त्री । कात्यायन्याम् । चण्डिकायाम् ॥

चर्म्मयष्टि । स्त्री । अश्वताडन्याम् । कशायाम् ॥ चर्मणो यष्टि ॥

चर्म्मरङ्गा । स्त्री । आवर्त्तकीलतायाम् । विभाषध्याम् ॥

चर्म्मव । पु । चर्मकारे ॥ इतित्रिकाण्डशेष ॥

चर्म्मसम्भवा । स्त्री । एलायाम् ॥

चर्म्मसार । पुं । } रसे ॥ इतिरा
चर्म्माम्भ । न । } जनिघण्टु ॥

चर्म्मार । पुं । चर्मकारे ॥ चर्मक्रियाम् ऋच्छति । ऋच्छे कर्मण्यण ॥ क्षिक्रुलमभेदे ॥ चर्मार शुक्लवर्णा स्यात् ॥

चर्म्मी । पु । फलकपाणौ । ढलैत इति भाषा ॥ भूर्जवृक्षे ॥ भृङ्गरीटे ॥ कदल्याम् ॥ चर्मास्यास्ति । व्रीह्यादि ॥

चर्य्या । स्त्री । ईर्य्यायाम् । नियमाख्यायोगे । ध्यानमौनादिकस्य भिक्षुव्रतस्यानुष्ठाने । ईर्य्यापथस्थितौ ॥ ईर्य्यतेमुरैः शास्त्रोपासनया ज्ञायते इति ईर्य्या । ईर्य्याया पन्था । ऋक्पूरित्यः । ईर्य्यापथे ध्यानाद्युपाये परिव्राजकादीनांस्थिति तस्यामित्यर्थ ॥ आचरणे ॥ चरणम् । चर० । गदमदचरयमश्चानुपसर्गेइतियत् ॥ यद्वा । परिचर्य्यापरिसर्य्येत्यत्र परीत्यस्या विवक्षणात् चर्य्येतिसाधुः ॥

चर्व्वणम् । न । दन्तैश्चूर्णने । चबावना इतिभाषा ॥ चर्वअदने । ल्युट् ॥

चर्व्वा । पु । तलप्रहारे ॥

चर्व्वित । त्रि । भक्षिते । कृतचर्वणे ॥ चर्व्यतेस्म । चर्व० । क्त ॥

चर्व्वितपात्रकम् । न । चर्विततांबूलादित्यागपात्रे । कटकोले । पतद्ग्रहे ॥

चर्व्यम् । त्रि । चर्वणीये ॥

चर्षणि । पु । जने ॥ कर्षति । कृष० । कृषेरादेश्चचइत्यनि ॥

चर्षणी । स्त्री । पुंश्चल्याम् ॥ कर्षति मन । कृषविलेखने । कृषेरित्यनि । कृदिकारादितिङीष ॥

चल । पु । कम्पे ॥ न । चञ्चले । लोले । तरले ॥ अल्पकालस्थायिनि । शरीरे जगतिच ॥ प्रतिक्षणमन्यथाभावात् ॥ नक्षत्रविशेषे । स्वात्यादिषुत्र्येश्रुतेस्त्रीशिचन्द्रश्चापिचरचलम् ॥ त्रि । कम्पयुक्ते । चञ्चले ॥ चलति चलगतौ । पचाद्यच् ॥

चलचञ्चु । पु । } चकोरपक्षि-
चलञ्चञ्चु । पु । } णि ॥

चलत्पूर्णिमा । स्त्री । चन्द्रकमत्स्ये ॥

चलदङ्ग । पु । } चेङ्गामाछ इ-
चलदङ्गक । पु । } तगौड भाषा प्रसिद्धे मत्स्ये ॥

चलद्दल । पु । अश्वत्थवृक्षे ॥ चलानि दलान्यस्य ॥

चलन । पु पादे ॥ हरिणे ॥ न । भ्रमणे ॥ कम्पे ॥ स्थिरत्वप्रच्युतौ ॥ देशान्तरप्राप्तिहेतुभूते क्रियाविशेषे ॥

चलनशीलम् । चल० चलनशब्दे तियुच् ॥ त्रि । कम्पे । कम्पयुक्ते ॥

चलनकम् । न । चण्डातके ॥

चलनी । स्त्री । वारीभेदे । गजबन्धन्याम् ॥ वस्त्रघर्घर्याम् । वस्त्रवेधिन्याम् ॥

चलपत्र । पुं । पिप्पलवृक्षे ॥ चलानि पत्राण्यस्य ॥

चलसङ्क्रम । पुं । ईश्वरेच्छालोकादृष्टवशात्सूर्याद्याभागस्य सूर्येन सम्पर्के ॥

चला । स्त्री । लक्ष्म्याम् ॥ चञ्चलत्वाच्चला त्वत्वे सर्वथैव मसंशय ॥ सिल्हके ॥ टाप् ॥

चलाचल । त्रि । चञ्चले ॥ चलति । चल० । चरिचलि ति द्वित्वादि ॥ पु । काके ॥

चलातङ्क । पु । वातरोगे ॥

चलाभास । पु । मायामयस्य रज्जुसर्पादेर्गमने ॥ चलमिवाभासतेइति तथा ॥

चलित । त्रि । कम्पिते ॥ उच्छलिते । तरलिते ॥ प्रचक्रे ॥ गते ॥ चल्यते स्म । चलकम्पने । क्त ॥

चलु । पु । गण्डूषे ॥ इतिहेमचन्द्र ॥

चलुक । पु । प्रसृतौ ॥ भाण्डप्रभेदे ॥

चवर्ग । पु । चादिपञ्चवर्णेषु ॥

चवर्गीय । पु । चवर्गभवेवर्णे ॥ वर्गान्ताच्चेतिछ ॥

चवल । पु । राजमाषे । चौँला इति भाषा ॥

चवि । स्त्री । चविकायाम् ॥

चविकम् । न । चव्ये ॥ चर्व्यते । चर्व० । क्वुन् । पृषोदरादि ॥

चविका । स्त्री । चइ इतिगौडभाषाप्रसिद्धे वृक्षे । चव्ये ॥ चविकाट्टाप् ॥

चव्यम् । न । चविकायाम् ॥ कणामूलभवं चव्य विशेषात्कुञ्जापकम् ॥ चर्व्यते । चर्व । यत् । पृ० ॥

चव्यकम् । न । चव्ये ॥

चव्यजा । स्त्री । } गजपिप्पल्याम् ॥
चव्यफलम् । न । }

चव्या । स्त्री । वचायाम् ॥ कार्पास्याम् ॥

चषक । पु न । सुरापानपात्रे । गल्वर्के । सरके ॥ अथचषकोद्देश । यत्पानपात्र भूपानां तज्ज्ञेय चषकं बुधै । काञ्चनं राजतञ्चैव स्फाटिकं काचमेवच ॥ वृक्ष स्वराष्ट्रदिक्कोणं चतुर्थीं पृथिवीभुजाम् । इत्यन्य

सम्मतं तेषां निर्णयपाठसम्मत ॥ स्वमुष्टिसम्मित रत्नै श्चतुर्वर्णैः समन्वितम्। मार्त्तिकवाऽथफालवा सर्वेषामुपयुज्यते। काष्ठज धातुज श्चैवं जाङ्गलादिमहीभुजाम्। यद्यत्तोयपानादिपात्रं पृथ्वीभुजा भवेत् ॥ एतंतत्रापिनियमइतिभोजस्य निश्चय ॥ * ॥ मधुनि। मद्ये ॥ मद्यभेदे ॥ मद्यभाजने ॥ चष्यतेऽनेन। चषभक्षणे। कुन् ॥

चषति। पु। भक्षणे ॥ वधे ॥

चषाल। पु। यूपकटके ॥ यज्ञसमाप्ति सूचकं पशुबन्धनार्थं यज्ञभूमौ यत्काष्ठमारोप्यते सयूप तच्छिरसि वलयाकृति डमरुकाकृति वाय का ष्ठविकार. सचषाल। यपमत्ते विक्ति तलोह्वलयश्च ॥ चषति चष्यते वा। चष०। सानसिवर्णसिपर्णसीतिचषे राल ॥

चाकचक्यम्। न। } उज्ज्वलतायाम् ॥ नहिलोकसिद्धसामग्री प्रातिभासिकरजतोत्पादिका किन्तु विलक्षणैव। तथाहि। काचादिदोषदूषितलोचनस्य पुरोवर्त्तिद्रव्यसंयोगादिदमाकाराचाकचक्याकाराच काचिदन्तःकरणवृत्तिरुदेतीतिवेदान्तपरिभाषा ॥

चाकचिक्यम्। न। }

चाकचिक्या। स्त्री। श्वेतवृक्षायाम् ॥

चाक्रायण। पु। उषस्त्याख्यर्षौ ॥ चक्रस्यगोत्रापत्यम्। अ० फञ् ॥

चाक्रिक। पु। वहुभिर्मिलित्वास्तुतिकारे। घाण्टिके ॥ चक्रेण समूहेन चरति। चरतीति ठक् ॥ शाकटिके ॥ तैलकारे ॥

चाक्षुष। पु। षष्ठमनौ ॥ न। रूपे ॥ चक्षुषागृह्यते। अण् ॥ चक्षुरेव वा। स्वार्थिक प्रत्यय ॥ प्रत्यक्षविशेषे ॥ तत्तु चक्षुरिन्द्रियजन्यज्ञानम्। द्रव्य चाक्षुषप्रति चक्षुसंयोग कारणम्। द्रव्यसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवाय। द्रव्यसमवेतसमवेतचाक्षुषंप्रति चक्षुसंयुक्तसमवेतसमवाय। तथाच भा० प०। द्रव्यग्रहस्तु संयोगात् संयुक्तसमवायत। द्रव्येषु समवेतानां तथातत्समवायत ॥ तत्रापिसमवेतानां शब्दस्यसमवायत। तद्वृत्तीनांसमवेतसमवायेनतुग्रह इति ॥ त्रि। चक्षुर्ग्राह्ये ॥

चाङ्गम्। न। दन्तपटुत्वे ॥

चाङ्गेरी। स्त्री। अम्ललोणिकायाम् ॥ चाङ्गेरीदीपनीरुच्या लघूष्णाकफवातनुत्। पित्तलाम्लाग्रहण्यर्शः कुष्ठातीसारनाशिनी ॥ चाङ्गम् ईरयति

। ईरम्प्रेरणे। कर्मण्यण् ॥

चाञ्चल्यम् । न । चञ्चलतायाम् ॥

चाट । पु । चौरे॥ आर्यमर्यादां यः स्व मर्यादां वा भिन्दाने ॥ प्रतारके ॥ आदौ विश्वासमुत्पाद्य पश्चात्परधनापहर्त्तरि। प्रच्छन्नापहारिणि तस्करे॥ योद्धरि कलहप्रिये ॥ चटनम् चाटनम्। चटभेदने। भावे घञ् ॥

चाटकैर । पु । चटकापत्ये॥ चटकाया चटकस्य वा पुमपत्यम्। चटकायाएरक् । चटकस्येति वाच्यम् ॥

चाटु । पु । न । प्रियवाक्ये । प्रियप्राये । चटौ ॥ चकारच बहुचाटून् प्रौढयोषिदिवस्योत । क्लीवमपि । चाटु चाऽकृतकसंभ्रम मासां कार्मणत्व मगमद्रमणेष्वितिच माघ ॥ चटति। चटभेदने। हृसनिजनीतिञुण् ॥ मिथ्याप्रियवाक्ये ॥

चाटुपटु । पु । भण्ड । भाँड इति भाषा ॥

चाटुलोल । चि । चटुलोले । सुचञ्चले ॥

चाटुवटु । पु । भण्डे। विदूषके। क्रीडनीयकपात्रे ॥

चाटूक्ति । स्त्री । सेवायाम् ॥ प्रियवाक्यायाम् ॥

चाणकीनम । न । चणकोत्पत्तियोग्यक्षेत्रे ॥ चणकानाम् भवन क्षेत्रम्। धान्यानामितिखञ् ॥

चाणक्य । पु । मुनिविशेषे । द्रौमिणे ॥ चणकस्य गोत्रापत्यम् । गर्गादित्वाद्यञ् ॥ न । तन्निर्मिते राजनीतिशास्त्रे॥

चाणक्यमूलकम् । न । मूलकप्रभेदे । वालेये । विष्णुगुप्तके ॥

चाणूर । पु । कंसासुरस्य प्रधानमल्ले ॥

चाणूरसूदन । पु । श्रीकृष्णे ॥ चाणूरं सूदितवान् । सूदयतेर्नन्द्यादित्वाल्ल्यु ॥

चाण्डाल । पु । चण्डाले । श्वपचे । अन्त्यजे ॥ चण्डालएव ।कुलालवरुडनिषादचण्डालमित्रामित्रेभ्यश्छन्दस्युपसंख्यानमितिछन्दस्यञ् ॥ प्रज्ञादित्वादणि लोकेपीतिकेचित् ॥

चाण्डालकि । पु । चण्डालापत्ये ॥

चण्डालवल्लकी । स्त्री । कण्डोलवीणायाम् ॥ चाण्डालस्यवीणा ॥

चाण्डालिका । स्त्री । कण्डोलवीणायाम् ॥ चण्डालिकाशब्दार्थे ॥ चण्डालस्येयम् । तस्येदमित्यण् । टिड्ढे तिङीप् । स्वार्थे कन् ॥ चण्डालेनकृता वा । कुलालादिभ्योवुञ् ॥

चाण्डाली । स्त्री । चण्डालयोषायाम् ॥ लिङ्गिन्याम् ॥

चातक । पु । स्तोकके । सारङ्गे । पपी

चा इतिभाषा ॥ यथा । सर्वसहाप तित मम्बु न चातकानामिति ॥ च तति । चते० । खुल् ॥

चातकानन्दन । पु । वर्षाकाले ॥

चातुक । पु । मर्दवीजे ॥ चातुको म धुरो हृद्यो रक्तपित्तकफ पह । शी तो लघु रुच यस्य कषायो वातको पन ॥

चातुर । पु । चक्रगण्डो ॥ त्रि । नेत्र गोचरे ॥ चाटुकारे ॥ नियन्तरि ॥ चतुरएव । स्वार्थे ऽण् ॥ न । शकटे ॥ चतुर्भिरुह्यते । शेषइत्यण् ॥

चातुरकः । त्रि । चतुरार्थे ॥

चातुराश्रम्यम् । न । ब्रह्मचारिगृहस्थ वानप्रस्थसन्यासिषु ॥ चत्वार आश्र माएव । चतु० स्वार्थेष्यञ् ॥ चतुर्णा माश्रमाणांधर्मे ॥

चातुरी । स्त्री । दाक्ष्ये । चतुरतायाम् ॥ याबोकद्वयसाधनीत्वनुभूतासा चा तुरी चतुरी ॥ चतुरस्येयम् । तस्येद मित्यण् । ङीप् ॥

चातुर्जातकम् । न । चतुर्जातके ॥ स्वार्थे अण् ॥

चातुर्दशिक । त्रि । भूताध्ययनकर्तरि ॥ चतुर्दश्यामधीते । अध्यायिन्यदे शकालादितिठक् ॥

चातुर्भद्रम् । न । नागरातिविषामुस्ता गुडूचीतिचतुष्टये ॥

चातुर्मासी । स्त्री । पूर्णिमाविशेषे ॥ चतुर्षुमासेषुभवा । सन्नायामित्य ण् । ङीप् ॥

चातुर्मास्यम् । न । यागविशेषे ॥ चा तुर्मास्ययागस्य चत्वारि पर्वाणि । वै श्वदेवो वरुणप्रघास शाकमेध, शु- नासीरीयश्चेति । चतुर्षुमासेषु भ वन्ति चातुर्मास्यानियज्ञानि । चतु र्मासाण्ण्योयज्ञइति ण्य ॥ आषाढ शुक्लद्वादश्यादिचतुर्मासकर्त्तव्ये व्रते ॥यथा । आषाढशुक्लद्वादश्या पौर्ण मास्यामथापिवा । चातुर्मास्यव्रतारम्भ कुर्यात् कर्कटसङ्क्रमे ॥ अभावेतु तुलार्केपिमन्वेण नियम व्रती । का र्त्तिके शुक्लद्वादश्यां विधिवत् तत् स मापयेत् ॥ चतुर्ष्वपिहि तच्चीर्णं चा तुर्मास्य व्रत नर । कार्त्तिक्यां शुक्ल पक्षेतु द्वादश्यांतत् समापयेदिति वाराह ॥

चातुर्मास्यद्वितीया । स्त्री । आषाढफा ल्गुनोर्जेषे या द्वितीया विधुक्षये । चातुर्मास्यद्वितीया सा प्रशस्तिम हर्षय ॥

चातुर्वर्ण्यम् । न । यज्ञसाधनेषु ब्राह्मण क्षत्रियविट्शूद्रेषु ॥ चत्वारोवर्णाएव । चतुर्वर्णादीनाम्स्वार्थे उपसङ्ख्यान

मितिष्यञ् ॥ देवेषु चत्वारो वर्णा
यथा । आदित्या क्षत्रियास्तेषां वि
शश्च मरुतस्तथा । अश्विनौ च स्मृतौ
शूद्रौ तपस्युग्रे समास्थितौ ॥ स्मृता
स्त्वाङ्गिरसो देवा ब्राह्मणा इति निश्चय
इति ॥

चातुर्वैद्य । पु । चतुर्वेदे ॥ चतुरो वे
दानधीते चतुर्वेद । स एव । चतुर्वेद
स्योभयपदवृद्धिश्चेति ब्राह्मणादिगणे
पाठात् ष्यञ् ॥

चात्त्वाल । पु । याज्ञिकानां गर्त्तविशे
षे ॥ चत्वाल एव । स्वार्थे अण् ॥

चानूर । पु । कंसमल्ले । चाणूरे ॥

चानूरसूदन । पु । श्रीकृष्णे ॥ चानू
रं सूदितवान् सूदयति वा । सूदक्ष
रणे । ल्यु ॥

चान्द्र । पु । चन्द्रकान्तमणौ ॥ शुक्ला
द्यमान्ते मासे ॥ कृष्णादिपूर्णिमान्ते
च मासे ॥ न । चान्द्रायणे ॥ चन्द्रस्या
यम् अण् ॥

चान्द्रकम् । न । शुण्ठ्याम् ॥ इति राज
निर्घण्ट ॥

चान्द्रभागा । स्त्री । } चन्द्रभागा
चान्द्रभागी । स्त्री । } याम् ॥

चान्द्रमस । पु । इन्दुजे ॥ भारतवर्षीयो
पद्वीपविशेषे ॥ न । मृगशिरोनक्ष
त्रे ॥ त्रि । चन्द्रमसस्सम्बन्धिनि ॥ च



न्द्रमसोऽपत्यम् इदं वा । अण् ॥

चान्द्रमसायन । पु । बुधे । सौम्ये ॥

चान्द्रमास । पु । चन्द्रसम्बन्धिमासे ॥
स तु गौणमुख्यभेदेन द्विविध ।
तत्राद्य कृष्णप्रतिपदादिपौर्णमास्य
न्त । द्वितीय शुक्लप्रतिपदादिदर्शा
न्त । चान्द्रोपि शुक्लपक्षादिः कृष्णा
दिर्वेति च द्विधेत्युक्ते ॥ तत्र मुख्य
चान्द्रे कर्माणि । आब्दिकश्राद्धादि
सपिण्डीकरणान्तश्राद्धानि चान्द्रायण
प्राजापत्यादिव्रतानि दानकर्म नि
त्यस्नान गृहपुष्करिण्यादिप्रतिष्ठा
साधारणतिथिविहितकर्माणि चेति॥
गौणचान्द्रे कर्माणि । अष्टकादिपार्व
णश्राद्ध वारुणीस्नान जन्मतिथिकृत्यं
जन्माष्टम्याद्युपवासो दुर्गोत्सवादि
तिथिनियतपूजा चेति ॥ चान्द्रश्चा
सौ मासश्च ॥

चान्द्रव्रतम । न । नृपतेर्व्रतविशेषे ॥
यथा ॥ परिपूर्णं यथा चन्द्रं दृष्ट्वा हृ
ष्यन्ति मानवा । तथा प्रकृतयो य
स्मिन् स चान्द्रव्रतिको नृप इति मनु ॥

चान्द्राख्यम । न । आर्द्रके ॥

चान्द्रायणम् । न । व्रतविशेषे । इन्दुव्रते
॥ तच्चतुर्विध भवति । पिपीलिका
मध्ययवमध्ययतिचान्द्रायण
शिशुचान्द्रायणभेदात् । तथाहि ।

एकैकह्रासयेत् पिण्ड कृष्णे शुक्ले च वर्द्धयेत्। उपस्पृशंस्त्रिषवणमेतच्चान्द्रायणस्मृतम् ॥ त्रिषवणं स्नानं कुर्वाणः पौर्णमास्यां पञ्चदशग्रासानश्नीयात् ततः कृष्णप्रतिपत्क्रमेण एकैकग्रासंह्रासयेत् । तथाच चतुर्दश्यामेकोग्रास सम्पद्यते । ततोऽमायामुपोष्य शुक्लप्रतिपत्प्रभृतिभिरेकैक वृद्धि-नयेत् एव पौर्णमास्यां पञ्चदशग्रासा सम्पद्यन्ते । एतत्पिपीलिकामध्याख्य चान्द्रायणम् ॥ १ ॥ एतमेवविधिकृत्स्न माचरेद्यवमध्यमे । शुक्लपक्षादिनियतश्चरश्चान्द्रायणव्रतम् ॥ एवमेवपिण्डह्रासवृद्धित्रिषवणस्नानात्मकविधान यवमध्याख्ये चान्द्रायणे शुक्लपक्षमादित कृत्वा सयतेन्द्रियश्चान्द्रायणमनुतिष्ठन् आचरेत् । ततश्च शुक्लप्रतिपदमारभ्य एकैकपिण्डवर्द्धयेत् । यथापौर्णमास्यां पञ्चदशग्रासा सम्पद्यन्ते । तत कृष्णप्रतिपदमारभ्य एकैकपिण्डह्रासयेत् । यथा अमावास्यायामुपवासोभवति ॥ २ ॥ अष्टावष्टौसमश्नीयात् पिण्डान्मध्यदिनेस्थिते । नियतात्मा हविष्याशी यतिचान्द्रायणंचरन् ॥ ३ ॥ चतुरप्रातरश्नीयात्पिण्डान्विप्र समाहित. । चतुरोस्तमितेसूर्ये शिशुचान्द्रायणस्मृतमितिमनु ॥ ४ ॥

चान्द्रायणिक । पु । तपस्विविशेषे ॥ चान्द्रायणं वर्त्तयति । पारायणतुरायणचान्द्रायणं वर्त्तयतीतिठञ् ॥

चान्द्री । स्त्री । श्वेतकण्टकार्याम् ॥ ज्योत्स्नायाम् ॥

चाप । पु । धनुषि । शरासने ॥ धनूराशौ ॥ पञ्चकलस्य ॥ऽ तृतीयप्रभेदे ॥ चापस्य व प्रभेदस्य विकार'। अवयवे च प्राण्योषधिवृक्षेभ्यश्च इत्यण् ॥

चापपट । पु । पियालवृक्षे ॥

चापलम् । न । अनवस्थितौ ॥ तल्लक्षणं यथा । मात्सर्यद्वेषरागादेश्चापलन्त्वनवस्थितिरिति ॥ अविनीतत्वे । प्रयोजन विनापि वाक्पारुष्यादिव्यापारयितृत्वे । अविमृश्यकारणरूपे चपलकर्मणि ॥ सञ्चारिभावे ॥ आत्मप्रकाशिनीचेष्टारागा देश्चापलमतमितिलक्षणात् ॥ चपलस्यकर्मभावो वा । यु० अण् ॥

चापल्यम् । न । चपलतायाम् ॥ चाञ्चल्ये । चापले ॥ चपलस्यकर्मभावो वा । गुणवचनत्वात् प्राप्तस्य ष्यञो युवादिपाठप्राप्तेनाणा वाधप्रसङ्गेपि ब्रा० ष्यञ् ॥

चामर । पु । न । चमरीपुच्छनिर्मिते वालव्यजने । प्रकीर्णके । चौर

चौंरी इति च भाषा ॥ अथ तयो
लक्षणदर्शनार्थमाह । देवैः सम
यै किल वालहेतोः सृष्टा हिमक्ष्मा
धरकन्दरेषु । आपीतवर्णास्च भवन्ति
तासां कृष्णास्च लाङ्गूलभवा सितास्च
॥ चमरीणां गुणसम्पदमाह । स्नेहो
मृदुत्वं बहुवालता च वैशद्यमल्पा-
स्थिनिबन्धनत्वम् । शौक्ल्यञ्च तासां
गुणसम्पदुक्ता विद्धाऽल्पपुच्छानि न
शोभनानि ॥ चामरदण्डलक्षणमा
ह । अध्यर्द्धहस्तप्रमितोऽस्य दण्डोह-
स्तोऽथवा रत्निसमोऽथवान्य । काष्ठाच्छु
भात् काञ्चनरूप्यगुप्तात्रत्नैश्चसर्वै-
श्च चित्रितायराज्ञाम् ॥ वर्णक्रमेण दण्ड
ल० । यष्ट्यातपत्राङ्कुशवेत्रचापवि
तानकुन्तध्वजचामराणाम् । व्यापी
ततन्त्रीमधुकृष्णवर्णा वर्णक्रमेणैव हि
तायदण्डः ॥ दण्डादेः समपर्वणः फ
लमाह । मातृभूधनकुलक्षयावहा
रोगमृत्युजननाश्च पर्वभिः । द्व्यादि
भिर्द्विकविवर्द्धितैः क्रमाद्द्वादशान्तवि
रतैः समैः फलम् ॥ तेषामेव त्र्यादि
षु विषमेषु द्विकविवर्द्धितेषु फलम् ।
यात्राप्रसिद्धि र्द्विषतां विनाशो ला-
भाः प्रभूता वसुधागमश्च । वृद्धिः पशू
नामभिवाञ्छितासि स्त्र्यादिष्वयु
ग्मेषु तदीश्वराणाम् ॥ इति वारा
ह्यां ७० ध्यायः ॥ विशेषोयुक्तिकल्प
तरौ ज्ञेय ॥ दण्डे ॥ अतिशर्करीस
मकपञ्चदशाक्षरावृत्ते प्रभेदे । य
था । शारदत्पयोधरमृगेन्द्ररञ्जुसु
न्दरं चामरध्वजद्वयेन मण्डितं हि
चामरम् । वृत्तराजमेतदेवनगाराज
भाषितं पण्डितावलीविनोदकारि
चारुभाषितम् ॥ यथा । रासलास्य
गोपकामिनीजनेन खेलता पुष्पपु
ञ्जमञ्जुकुञ्जमध्यगेन दोलता । तान्व
न्वयशालिगोपबालिकाविलासिना
माधवेनजायतां सुखायमन्दहासिने
ति ॥ गुर्वऽन्तरेऽ ॥

चामरपुष्प । पु । न । पूगे ॥ काशे ॥
आम्रे ॥ केतके ॥

चामरा । स्त्री । चामरे ॥ दण्डे ॥ च
मा० टाप् ॥

चामरी । पु । घोटके । किङ्किणि ॥
इति त्रिकाण्डशेष ॥

चामीकरम् । न । स्वर्णे । कनके ॥ च
मीकरे आकर विशेषे भवम् । तत्र
भवः इत्यण् ॥ यद्वा । चमनम् चम्०
। इण् जादिभ्य इतीण् । कनाचमे
रिति आक्रोऽविवक्षितत्वाद्वृद्धि ।
चामीकरोति । कृञो हेत्विति ट' ॥

चामुण्डा । स्त्री । मातृकाभेदे । चर्म
मुण्डायाम् । भैरव्याम् ॥ दुर्गायाम् ॥

। गौर्य्याम् ॥ मोक्षकारणीभूतनि-र्विकल्पकवृत्तिविशेष अमूसेनां वियदादिसमूहरूपांडाति खण्डयोरैक्या स्मति आदत्ते स्वात्मसाक्षात्कारेण नाशयति इतिव्युत्पत्ते । पृषोदरा-दित्वात् सर्वं सुस्थमित्याहुः ॥ मया तवात्रोपहृतौ चण्डमुण्डौ महापशू इत्यत्रपशुपदद्विवचनयो स्वारस्येन तूलमूलभेदेनाज्ञानद्वयकथनेन यस्माच्चण्डञ्चमुण्डञ्चगृहीत्वात्वमुपागता । चामुण्डेति ततोलोके ख्यातादेवी भविष्यसीत्यत्रापि तूलमूलाविद्ययोरादानमेव गृहीत्वेति पदेनानूद्य निर्वचनकथनादखण्डब्रह्मविद्यैवचामुण्डापदस्यार्थोवर्णित इतिसूक्ष्मदर्शारहस्यम् ॥ यद्वा । चमति । चमु अदने । वा० उण् । चामुरदनीय पदार्थ. । स च ब्रह्मातिरिक्त सर्वोपि । अत्ता चराचरग्रहणादित्यधिकरणे तथानिर्णयात् । तण्डापयति उट्टण्डापयति नविषयी करोति ब्रह्मसाक्षविषयिणीतियावत् ॥ अथवा चकार एकाक्षरनिघण्टुरीत्या चन्द्रवाचक आह्लादप्रकाशगुणयोगादिहज्ञानपर आनन्दपरोवा तच्चब्रह्मैवचक्ति तदा समन्तान्मुण्डयतीति चामुण्डा । मुण्डन नामाधारापेक्षयान्यूनसत्ताकवस्तुनिरास । शिरश्चर्मापेक्षयान्यूनतादात्म्यवतामेवकेशानावपने प्रयोगात् ॥ अथ वा चाना वृद्धीना मुखाना वा मुण्डमिवशीर्षमिवस्थिता सर्वोत्तमा चरमवृत्तिरूपा ब्रह्मविद्येतियावदिति गौडपादटीकानुवादीभास्करराय ॥

चाम्पिला । स्त्री । नद्याम् । निर्झरिण्याम् ॥

चाम्पेय । पुं । चम्पके ॥ स्वर्णे ॥ किञ्जल्के ॥ नागकेसरे ॥ चम्पाया अपत्यम् । स्त्रीभ्योढक् ॥

चाम्पेयकम् । न । किञ्जल्के ॥

चायनीय । त्रि । पूजनीये ॥

चार । पु । पियालवृक्षे । चिरौंजी इति प्रसिद्धे ॥ चार पित्तकफास्रघ्नस्तत्फलं मधुरं गुरु । स्निग्धं सरं मरुत् पित्तदाहज्वरतृषापहम् ॥ पियालमज्जा मधुरो वृष्य पित्तानिला-पह । हृद्योऽतिदुर्जर स्निग्धो विष्टम्भी चामवर्द्धन ॥ गतौ ॥ बन्धे ॥ अवसर्पे । चरे । प्रणिधौ ॥ चारान् विचारयेत् तीर्थेष्वात्मनश्च परस्य च । पाषण्डादीनऽविज्ञातानन्योन्यमवितरेपि च ॥ * ॥ अमात्य समान्त्य मन्त्रपाभाषितस्य समूहकत्वे तचार गुणा इतिनीति वाक्यमतम् ॥ * ॥

तल्लक्षणं यथा । विवस्वानिव तेजोभिर्नभस्वानिव वेगतः । राजा चरेज्जगत्सर्वं प्राप्नुयाल्लोकसम्मतेः ॥ तर्केङ्गितज्ञः स्मृतिमान् स्वीयभावाप्रकाशकः । क्लेशायाससहोदक्षः सर्वत्र भयवर्जितः ॥ सुभक्तो राजसु तथा कार्याणां प्रतिपत्तिमान् । नृपो निजान्याश्चारेणापरराष्ट्रं विचक्षणः ॥ कालज्ञो मन्त्रकुशलान् सांवत्सरचिकित्सकान् । तथान्यानपि युञ्जीत समर्थान् शुद्धचेतसः ॥ अक्षुद्रांश्चतथा ऽलुब्धान् दृष्टार्थानतत्त्वभाषिणः । पाषण्डिनस्तापसादीन् परराष्ट्रे नियोजयेत् ॥ स्वदेशपरदेशज्ञान् सुशीलान् सुविचक्षणान् । वार्त्ताश्रयान् बहूंश्चैव चाराणां विनियोजयेत् ॥ नैकस्य वचने राजा चारस्य प्रत्ययं व्रजेत् । द्वयोः सम्बन्धमाज्ञाय तद्युक्तं कार्यमाचरेत् ॥ तस्माद्राजा प्रयुञ्जीत चारान् बहुमुखान् बहून् । नीरेतो वामना कुब्जास्तद्विधा ये च कारवः ॥ भिक्षुक्यश्चारणा दास्यो मालाकार्यः कलाविदः । अन्तःपुरगतां वार्त्तां निष्कर्षेयुरवञ्चिताम् ॥ प्रकाशश्चाऽप्रकाशश्च चारस्तु द्विविधो मतः । अप्रकाशोऽयमुद्दिष्टः प्रकाशो दूतसंज्ञकः ॥ इति युक्तिकल्पतरुः ॥ कारागारे ॥ न । कृत्रिमविषे ॥ चरणम् । चरगतौ । घञ् ॥ चरति वा । पचाद्यच् । चरएव । प्रज्ञाद्यण् ॥

चारक । पु । अश्वादेः पालके ॥ सञ्चारके ॥ बन्धे ॥ पियालद्रुमे ॥ चारे ॥ स्वार्थे कः ॥

चारचक्षुस् । पु । राजनि ॥ चाराश्चक्षूंषि यस्य । गावः पश्यन्ति गन्धेन वेदैः पश्यन्ति वै द्विजाः । चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥ स्वपरमण्डलकार्याकार्यविलोकने चाराश्चक्षुंषि क्षितिपालानामिति नीतिवाक्यामृतम् ॥

चारचुञ्चु । त्रि । गतिविशेषैर्वित्ते ॥ चुञ्चुप् ॥

चारटिका । स्त्री । नलीनामगन्धद्रव्ये ॥

चारटी । स्त्री । पद्मचारिण्यामोषधौ ॥ भूम्यामलक्याम् ॥ चारयति । चरेर्णयन्तात् अकादिभ्यो ऽटन् । ङीप् ॥

चारण । पु । कीर्त्तिसञ्चारकनटे । कुशीलवे ॥ चारयति कीर्त्तिम् । चर० । णिजन्तः । नं० ल्यु ॥ देवानां स्तुतिपाठके ॥

चारपथ । पु । राजपथे ॥

चारभट । पु । वीरे ॥

चारवायु । पु । निदाघजेवायौ ॥

चारिणी । स्त्री । करुणीवृक्षे ॥

चारित्रम् । न । स्वभावे । चरित्रे ॥ कुलक्रमागताचारे ॥ चरित्रमेव । स्वार्थेऽण ॥ चर्त्रितेन । चर० । चरेर्वृ त्तइति णित्रन् वा । स्वरभेद ॥

चारित्रा । स्त्री । तिन्तिडीवृक्षे

चारी । स्त्री । नृत्याङ्गविशेषे ॥ विवरणान्तुसङ्गीतदामोदरे ॥

चारु । पु । बृहस्पतौ ॥ त्रि । शोभने । रम्ये । मनोज्ञे ॥ चरति चित्ते । चर० । दृसनिजनिचरिचटिभ्यो ञुण् ॥ न । कुङ्कुमे ॥

चारुक' । पु । शरबीजे ॥

चारुकेशरा । स्त्री । तरणीपुष्पे ॥ नागरमुस्तायाम् ॥

चारुगर्भ' । पु । } श्रीकृष्णपुत्रे ॥
चारुगुप्त' । पु । }

चारुदेष्ण । पु । रुक्मिण्यांश्रीकृष्णतनये ॥

चारुधारा । स्त्री । इन्द्राण्याम् ॥ स्या दिंद्राणी शतावरी चारुधारेति रभस ।

चारुनालकम् । न । रक्तपद्मे ॥

चारुपर्णी । स्त्री । प्रसारण्याम् । गन्धभादालिया इति गौडभाषा ॥

चारुफला । स्त्री । द्राक्षायाम् ॥ चारूणिफलान्यस्या' ॥

चारुमती । स्त्री । रुक्मिण्यां श्रीकृष्ण कन्यायाम् ॥

चारुलोचन । पु । हरिणे ॥ त्रि । सुलोचने ॥

चारुवर्द्धना । स्त्री । नार्य्याम् ॥

चारुबाहु । पु । } श्रीकृष्णात्मजे॥
चारुविन्द । पु । }

चारुव्रता । स्त्री । मासोपवासिन्याम् ॥

चारुशिला । स्त्री । मणौ ॥

चार्म्मिक । त्रि । चर्माभिज्ञे ॥ उक्थादिभ्यष्ठक् ॥

चार्च्चिक्यम् । न । चन्दनादिना देहविलेपने । चर्चायाम् । स्थासके ॥ चर्चेअध्ययने । धात्वर्थनिर्देशे ण्वुल् । चर्चिकैव । स्वार्थेष्यञ ॥

चार्म्म । पु । चर्मावृतरथे ॥ चर्मणापरिवृत । परिवृतोरथइत्यण् ॥

चार्म्मणम् । न । चर्मसमूहे ॥ चर्मणां समूह । भिक्षादिभ्योऽण् ॥

चार्वाक' । पु । बौद्धैकदेशिनि । आकाशभिन्नभूतचतुष्टयवादिनि तार्किकविशेषे । नास्तिके । बार्हस्पत्ये । लौकायतिके ॥ तस्येदंमतम् । शरीरमेवात्मा । प्रज्वलितगृहात् स्वपुत्र परित्यज्यापि स्वस्य निर्गमदर्शनात् । स्थूलोहंकृशोहमित्यनुभवाच्च ॥ प्रत्यक्षमेकचार्वाका' प्रमाणं मन्यन्ते ॥ अपिच । सर्वथालोकायतमेवशा

त्वम्। यत्प्रत्यक्षमेवप्रमाणम्। पृथिव्यापस्तेजोवायवस्तत्त्वानि चत्वार्येव। अर्थकामौच पुरुषार्थौ। भूतान्येवचेतयन्ते नास्ति परलोकः। मृत्युरेवापवर्ग इति॥ दुर्योधनसखे राक्षसविशेषे॥

चार्वी। स्त्री शोभनायाम्॥ बुद्धौ॥ ज्योत्स्नायाम्॥ धनदभार्यायाम्॥ दीप्तौ॥

चालः। पु। छप्पर इति ख्याते पटले। पिटे। छदिषि॥ चलति। चलगतौ। ज्वलितिकसन्तेभ्यो णः। वृद्धिः॥

चालकः। पु। गम्भीरवेदिनि। अङ्कुशदुर्धरे हस्तिनि॥ इति चिकाण्डशेषः॥

चालनम्। न। चालन्याम्। सूक्ष्मच्छिद्रसमोपेत चालनं तितउः स्मृतमिति काव्यः॥ चाल्यतेऽनेनवा। चल०। णिजन्त। ल्युट्॥ धूनने॥

चालनी। स्त्री। तितऊ। सूक्ष्मच्छिद्रायाम्। चलनी इति भाषा॥ चाल्यतेऽनया वा। चलेर्ण्यन्तात्ल्युट्। ङीप्॥

चाषः। पुं। स्वर्णचूडे। किकीदिवौ। नीलाङ्गे। पुण्यदर्शने॥ अशोकश्च विशोकश्च नन्दन पुष्टिवर्द्धन। हेमतुण्डो मणिग्रीव स्वस्तिक श्चापराजित॥ अष्टौ चाषस्य नामानि चाषदृष्ट्वातु य पठेत्। अर्थसिद्धिर्भवेत्तस्य मिष्टमन्न वराङ्गनेतिपठन्ति। नीलकण्ठइत्यस्यप्रसिद्धिर्लोके॥ चाषयति। चषहिंसायाम्। स्वार्थणयन्तात् अच्। चषभक्षणे। हेतुमण्णयन्ताद्वाऽच्॥

चासः। पुं। इक्षुप्रभेदे॥ पक्षिविशेषे। चाषे॥

चिक। पु। गन्धमूषिके॥

चिकर्त्तिषु। त्रि। कर्त्तुमिच्छौ॥ कृतीछेदने। सन्नन्तादुप्रत्ययः॥

चिकित्सकः। पु। वैद्ये। चिकित्सा जीविनि॥ आयुर्वेदकृताभ्यासः सर्वेषांप्रियदर्शन। आर्यशीलगुणोपेत एषवैद्योविधीयते॥ चिकित्सति। कितेर्व्याधिप्रतीकारे इतिसन्नन्तात् ण्वुल्॥

चिकित्सा। स्त्री। रोगवारणे। रुक्प्रतिक्रियायाम्। क्रियायाम्॥ आसुर्यादिभेदात्सा त्रिधा। यथा। आसुरी मानुषी दैवी चिकित्सा त्रिविधामता। शस्त्रप्रधानादैवीस्याच्छेदभेदात्मिकासुरी॥ मानुषी पञ्चसाध्ययाजपहोमादिसंस्कृता। कलौचाल्पबले लोके मानुषीतत्पूजिता॥ तल्लक्षणं यथा। याभिः

क्रियाभि र्जायन्ते शरीरे धातवः स मा । साचिकित्सा विकाराणां क र्म तद्भिषजांमतम् ॥ याह्युदीर्णं शमयति नान्य व्याधि करोतिच । साक्रिया नतु या व्याधि हरत्यन्य मुदीरयेत् ॥ अस्या फलम । क्वचि दर्थ क्वचिन्मैत्री क्वचिद्धर्म क्वचिद्य श । कर्माभ्यासः क्वचिच्चेति चिकि त्सानास्ति निष्फला ॥ अस्याअङ्गा नियथा । रोगी दूतो भिषग्दीर्घ मायुर्द्रव्याश्च सेवक । सदौषधं चि कित्सायामित्यङ्गानि बुधाजगुरि ति॥गुप्तिज्किद्भ्य इतिकितेर्व्याधिप्र तीकारे निग्रहे अपनयने नाशने स शयेचसन् । चिकित्सनम् । अप्रत्य यात् ॥

चिकित्सित । त्रि । प्रतिकृतामये । कृतप्रतीकारे ॥ न । चिकित्सायाम् ॥ भेषजे ॥ चिकित्सा सञ्जाताऽस्य । तारकादित्वादितच् ॥

चिकित्स्य । त्रि । रोगान्नाशयितव्ये ॥ चिकित्सितुयोग्य । रोगे ॥ यथा । जातमात्र श्चिकित्स्य स्यान्नोपेक्ष्योऽल्पतयागद । वह्निशत्रुविषैस्तुल्य स्वल्पोपिविकरोत्यसौ ॥ रोगमादौ परीक्षेत तदनन्तरमौषधम् । ततः कर्मभिषक्पश्चाद् ज्ञानपूर्वंसमाचरे



दिति ॥

चिकिन । त्रि । चिपिटे । चिक्के ॥ नासिकायानतम् । इनच्पिटच् चिक चिचेति नेरिनच् प्रकृतेश्चिकादेशश्च । तद्योगान्नासिका चिकिना । पुरुषश्चिकिन ॥

चिकिल । पु । पङ्के । चीकडइतिभाषा॥

चिकीर्षा । स्त्री । कर्त्तुमिच्छायाम् ॥ कृञ्० । अप्रत्ययादित्य. । टाप् ॥

चिकीर्षितम् । न । अभिप्राये॥ कर्त्तुमीप्सिते ॥

चिकीर्षु । त्रि । कर्त्तुमिच्छौ । करणेच्छाविशिष्टे ॥ कर्त्तुमिच्छति चिकीर्षति । तच्छील । सनाशसभिक्षउ ॥

चिकुर. । पु । कुन्तले । वाले ॥ हस्तप्र भेदे ॥ पक्षिविशेषे ॥ शैले । पर्वते ॥ गृहवभ्रौ ॥ सरीसृपे ॥ त्रि । तरले । चञ्चले ॥ चपले । दोषमनिश्चित्यवधबन्धनादे कर्त्तरि ॥ तस्ये ॥ यथा । तावीक्ष्यलीलाचिकुरा म नङ्ग' स्वचापसौन्दर्यमदं मुमोचेति ॥ चिनोत्यनेनशब्द कुरति । कुर शब्दे । इगुपधेतिक ॥

| | | |
|---|---|---|
| चिकुरपक्ष । पुं । | } | केशसमूहे ॥ |
| चिकुरपाश. । पु । | | |
| चिकुरहस्त । पु । | | |

चिकूर. । पु । चिकुरे ॥ इतिशब्दभेद

प्रकाश. ॥

चिक्क । पु । छुच्छुन्दर्याम् ॥ त्रि । नत नासिके । चिपिटे ॥ नासिकाया नतम् । कप्रत्ययेनेश्चिका देशश्च ॥

चिक्कण । पु । पूगवृक्षे ॥ न । पूगफले ॥ त्रि । मसृणे । स्निग्धे । चिकणा इति भाषा ॥ चिक्कनम् । चिक्कणतौ । संज्ञिप् । चिक्क कणति । कणशब्दे । मूलक ॥ यद्वा । चिक्कनम् । चक्ष् । चिक्कस्य कणम् । कणशब्दे । अच् । शकन्ध्वादि ॥ यद्वा । चेतति । चितीसंज्ञाने । चितेः कण कश्च । बाहुलकाद्गुणः ॥

चिक्कणा । स्त्री । उत्तमायाकृषि । नैचिक्याम् ॥ पूगफले ॥

चिक्कणी । स्त्री । पूगफले ॥

चिक्कस । पुं । यवचूर्णे ॥ इति हेम ॥

चिक्का । स्त्री । पूगफले ॥ इति राजनिर्घण्टः ॥

चिकित्सा । स्त्री । कितितुमिच्छायाम् । जिघत्सायाम् ॥ कितेः सन्नन्ताद प्रत्ययादित्यकारप्रत्यये टाप् । गुप्तिज्किद्भ्यः सन् इत्यनेनात्मनेपदनिमित्तत्वेऽपि नात्मनेपदं भवति । अपगमे सन् इत्यादिस्थलेऽर्थे ऽप्य ऽनुपसर्गादेति वैकल्पिकस्यात्मनेपदनिमित्तस्यानुपसर्गस्य-स्यैवविकल्पस्य सम्भवात् ॥

चिक्कट । पु । गर्त्ते चिक्कड़ा इति भाषा चिङ्गड़ी इति च गौड भाषा प्रसिद्धे मत्स्ये । मत्स्यभक्षे ॥

चिक्कटी । स्त्री । घुषाचिङ्गड़ी इति गौड प्रसिद्धे मत्स्ये ॥

चिक्कड । पुं । चिक्कटमत्स्ये ॥

चिचिण्डः । पु । चिचिण्डे । सुदीर्घफले ॥

चिचीषा । स्त्री । चेतुमिच्छयाम् ॥ चिनोतेः सन्नन्ताद प्रत्ययादिति स्त्रियामकार प्रत्ययः । विभाषा चेरिति विकल्पात् कुत्वाभावः ॥

चिच्छक्ति । स्त्री । चैतन्ये ॥ यथोक्तं स्तकूर्मपुराणे । चिच्छक्ति परमेश्वरस्य विमला चैतन्यमेवोच्यते इति । अथोक्तं श्रीदेवीभागवते ५ स्कन्धे १९ ऽध्याये । चिच्छक्तिरस्ति परमात्मनि तेन सोऽपि व्यक्तो जगत्सु विदितो भवकृत्यकर्त्ता । कोऽन्यस्त्वया विरहितः प्रभवत्यमुष्मिन् कर्त्तुं विचर्त्तुमपि संचलितुं स्वशक्त्येति ॥ २८ ॥ हे मातः सा चिच्छक्तिः परमात्मन्यस्ति तेन हेतुना सोऽपि परमात्मा व्यक्तो नामरूपात्मको भवति सचाजगत्सु विदितः प्रसिद्धः तथा भवकृत्यकर्त्ता प्रपञ्चसृष्टिस्थितिसंहृतिकर्त्ता भवति । क पुरुषो ऽस्मात् परमात्मनः

नोऽन्यस्त्वद्विरहितः स्वयमेवामुष्मिन् प्रपञ्चे कर्त्तुं विहर्त्तुं तथासन्धिनिरु प्रभवति नकोपीत्यर्थः । यदुक्तित त्द्विरहितापि त्वशक्तिरूपा भवत्येव । एतादृशीत्वं सकलकारणा महनीयेति भावः । तदुक्तं दक्षिणामूर्त्तिसंहितायाम् । शक्त्याविना शिवेसूक्ष्मे नाम धाम न विद्यते इति ॥

चिञ्चा । स्त्री । अम्लिकाऽगमे ॥ चिमि त्यव्यक्तं शब्दं चिनोति ॥ चिञ्० । अन्येभ्योपीतिड. ॥ फले ॥ चिञ्चाया फलम् । हरीतक्यादित्वात्फलप्रत्ययस्लुप् ॥

चिञ्चाम्लम् । न । }
चिञ्चासारः । पु । } अम्लशाके ॥

चिञ्चिका । स्त्री । अम्लिकायाम् । अम्ली इति हम्ली इतिच भाषा ॥

चिञ्चिड । पु । सुदीर्घफले । चचैंडा इति भाषा ॥ चिञ्चडो वातपित्तघ्नो बल्यः पथ्यो रुचिप्रदः । शोषघ्नेति चित किञ्चिद्गुणैर्न्यून पटोलतः ॥

चिञ्चुकी । स्त्री । चञ्च्वाम् । दीर्घपत्रायाम् । चेंचू नाडीशाके ॥

चिञ्चोटक । पुं । भङ्गलोरे । चेंचुको इतिचेंचुड इतिच गौडप्रसिद्धे तृणे ॥

चित् । अ । असाकल्ये । कसकलार्थे ॥ यथा । किञ्चित ॥ चेतति । चितीसंज्ञाने । क्विप् ॥

चित् । स्त्री । चर्सो । बुद्धौ ॥ अजडे । निर्विशेषस्फुरणमात्रे चेतने । स्वत एव प्रकाशमाने ब्रह्मणि ॥ निर्विकल्पकं सर्वावभासकं ज्ञानं प्रत्यगात्मस्वरूपं चिदितिव्याख्यातारः ॥ चिद्विहाश्मीति चिन्मात्रमिदं चिन्मयमेवच । चित्त्वं चिदहमेतेच लोकाश्चिदिति भावयेत्युपदेशः ॥ चिती० । सं० क्विप् ॥

चितः । त्रि । क्षमे ॥ चीयतेस्म । चिञ्० । क्तः ॥

चिता । स्त्री । चित्यायाम् । मृतार्थे दारुषु । प्रेतदाहार्थेऽन्याधाने ॥ शवदाहार्थे रचनायुक्तकाष्ठेषु ॥ संहतौ ॥ चीयतेस्म । चिञ्चयने । क्तः । टाप् ॥

चिताचूडकम् । न । चितायाम् ॥

चितिः । स्त्री । चितायाम् ॥ समूहे । वृन्दे ॥ निर्विषयकसंविदि ॥ बौधादिभ्रिष्टकासङ्ख्याज्ञानार्थोक्तविशेषे ॥ अग्निस्थानविशेषे ॥ चीयते । चिञ्० । स्त्रियां क्तिन् ॥

चितिका । स्त्री । कटिशृङ्खलायाम् ॥

चित्तम् । न । चेतसि । अनुसन्धानात्मिकायामन्तःकरणवृत्तौ ॥ चित्तस्य बुद्ध्यात्मभावः विषयपरिच्छित्ति

रूपत्वाविशेषात् । बुद्धेश्च पूर्वाविष य. चित्तस्य पूर्वानुभूत इतिविषयभेदात चित्तस्यक्वचित् पृथङ्निर्देशोप्यस्ति ॥ चैतन्ये ॥ यथा । एवनजायतेचित्तमिति ॥ विज्ञानस्कन्धे ॥ चितौ । भावे क्त. । स्त्रीदितइतीडनिषेध. ॥ चितायाम् ॥ चिताकाष्ठमठी चैत्यंचिताचूडकमिष्यते । चित्तत्वे तिचिकायडशेषात् ॥

चित्तकाल' । पु । चित्तपरिच्छेदे ॥ नान्यश्चित्तकालव्यतिरेकेण परिच्छेदक कालोयस्य तथा ॥

चित्तजन्मा । पु । कामदेवे ॥

चित्तदोष । पु । शून्यतायाम् ॥

चित्तनदी । स्त्री । उभयतोवाहिन्याम् ॥ इयं ह्युभयतोवहति कल्याणाय वहति पापायच । तत्र या कैवल्यप्राग्भारा विवेकनिम्ना साकल्याणवहा । याचाविवेकनिम्ना संसारप्राग्भारा सापापवहा ॥

चित्तप्रसन्नता । स्त्री । हर्षे ॥

चित्तबन्धनम् । न । चित्तबन्धकारणे । मूलाज्ञाने ॥ चित्तस्यबन्धनम् ॥

चित्तभञ्जनम् । न । रूपक्रियानुसन्धानराहित्ये ॥

चित्तमोदक: । पु । लड्डुकविशेषे ॥

चित्तल' । पु । मृगविशेषे ॥ कसितति सोज्ज्वलतैलविपक्क खण्डयुतं भवति क्षुरसाख्यम् । त्रिकटुकयुक्तनिशार्द्रकमिश्र बहुगुणचित्तलमांसमनर्घ्यम् ॥ रसे पाकेच मधुरं रक्तपित्तविनाशनम् ॥

चित्तविक्षेप. । पु । योगप्रतिपक्षेषु व्याधिस्त्यानादिषु ॥ चित्तं विक्षिपन्ति योगादपनयन्तीति चित्तविक्षेपा: योगप्रतिपक्षा । तेच नव योगमलेनोक्ता । यथा । व्याधिस्त्यान संशयप्रमादालस्याविरतिभ्रान्तिदर्शना-लब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेन्तराया इति ३० । तत्रसंशयभ्रान्तिदर्शने तावद्वृत्तिरूपतया वृत्तिनिरोधरूपस्य समाधे. साक्षात्प्रतिपक्षौ । व्याध्यादयस्तु सह वृत्तिसहचरितत्वतया तत्प्रतिपक्षा-भवन्ति ॥

चित्तवित् । पुं । विज्ञानात्मवादिनिबौद्धविशेषे ॥ चित्तमेव बाह्याकारशून्य विज्ञानं तदेवात्मेतिविज्ञानवादिनो भ्रान्तिरेव । सुषुप्ते व्यभिचारात् वेद्यस्यच घटादिव्र द्व्यतिरिक्तवेद्यत्वात् ॥

चित्तविप्लव. । पुं । उन्मादे ॥

चित्तविभ्रम: । पु । उन्मादे ॥ चित्तस्यविभ्रमो ऽनवस्थानम् ॥

चित्तसमुन्नति । स्त्री । माने ॥ चित्तस्य सम्यगुन्नति ॥

चित्तहारी । त्रि । मनोरमे ॥

चित्ताभोग । पु । एकस्मिन्विषये मनसो भूयोभूय प्रवृत्तौ । एकस्मिन्विषयेचित्तस्थैर्ये । मनस्कारे ॥ आभोजनम् आभोग । भुजेर्भावे घञ् । चित्तस्य आभोगस्तदेकप्रवणता आभोगपरत्वमितियावत् ॥

चित्ति । स्त्री । प्रज्ञायाम् ॥

चित्तैकाग्र्यम् । न । अन्यार्थनिवृत्तौ ॥

चित्तोक्ति । स्त्री । दैवप्रश्ने ॥

चित्तोत्थम् । न । सप्तमगृहे ॥

चित्तोन्नति । स्त्री । गर्वे ॥

चित्प्रतिबिम्ब । पु । जीवे ॥ चित प्रतिबिम्ब ॥

चित्य । पु । अग्नौ ॥ चीयतेऽसावित्यर्थे चित्याग्निचित्येचेति चिनोते' कर्मणि यप्रत्ययस्तु गागमश्च निपात्यते ॥ न । चितायाम् । मृतकचैत्ये ॥ जिनौकसि ॥

चित्या । स्त्री । मृतचितौ । चितायाम् ॥ टाप् ॥

चित्र । पु । यमविशेषे ॥ यथा । चित्राय चित्रगुप्तायेति ॥ कर्बुरवर्णे ॥ अशोकवृक्षे ॥ चित्रकवृक्षे ॥ एरण्डवृक्षे ॥ न । तिलके ॥ आलेख्ये । सूरत इतिभाषा ॥ अद्भुते ॥ कर्बुरे । नानावर्णे ॥ आकाशे ॥ न । अलङ्कारविशेषे ॥ यथा । तच्चित्र यत्रवर्णानां खड्गाद्याकृतिहेतुता । सन्निवेशविशेषेण यत्र न्यस्ता वर्णा खड्गमुरजपद्माद्याकारमुल्लासयन्ति तच्चित्रकाव्यम् ॥ कष्टकाव्यमेतत् ॥ * ॥ अष्टिसप्तकषोडशाचरायावृत्तौ ॥ यथा । चित्रसज्ञमीरितसमानिकापदद्वयन्तु । यथा । बिन्दुमाकणाधरोष्ठशोभिवेणुवाद्यहृष्ट वल्लवीजनाङ्गसङ्गजातमुग्धकण्टकाङ्ग । त्वासदैववासुदेवपुण्यलभ्यपादसेवनन्यपुण्यचित्रकेश त्वाश्रयामि गोपवेशइति ॥ चित्तपावते दुःखविस्मारकत्वात् । चेङ् पालने । आतोऽनुपसर्गेक ॥ चित्रयति वा चित्र-चित्री करणे । ण्वुल्तात् पचाद्यच् ॥ चिनोति चीयते वा । अमिचमीति क्त ॥ त्रि । कर्बुराद्भुतयुक्ते ॥

चित्रक । पु । पाठिनि । वह्निसंज्ञके ओषधौ । चीता इति भाषा ॥ चित्रक' कटुक पाके वह्निकृत् पाचनो लघु. । रूक्षोष्णो ग्रहणी कुष्ठशोथार्श. कृमिकासनुत् ॥ वातश्लेष्महरो ग्राही वातार्श श्लेष्मपित्तहृत् ॥ विधिर्न चैत्रक शाक कासमर्द विमर्दितम् । तप्ततैले सवाल्हीके प्राचित

तक्रसम्भूतम् ॥ चीता इतिभाषा प्रसिद्धे व्याघ्रविशेषे । शूरे । मृगान्तके ॥ एरण्डवृक्षे ॥ न । तिलके ॥ चित्रयति । चित्र० । क्वुन्शिल्पिसंज्ञयो ॥ यद्वा । चित्रंबुद्धिर्जायते । चै० । कात्तात् स्वार्थेकन् ॥ चित्र करोतिवा । अन्येष्वपीतिडः ॥

चित्रकण्ठः । पुं । कपोते ॥ ॥

चित्रकम्बलः । पुं । गलीचा इति दुलीचा इतिचभाषा प्रसिद्धे कम्बलविशेषे ॥

चित्रकरः । पुं । शूद्रागर्भे विश्वकर्मौरसजाते चितेरा इतिख्याते वर्णसङ्करजातिविशेषे । चित्रकारे । रङ्गाजीवे ॥ इतिब्रह्मवैवर्त्त पुराणम् ॥ चित्रकरोति । डुकृञ्० । दिवाविभानिशेतिट ॥

चित्रकर्मा । पुं । तिनिशद्रुमे ॥ त्रि । विविधाद्भुतकर्मणि ॥

चित्रकाय । पुं । व्याघ्रे । वाघ इतिभाषाप्रसिद्धे ॥ चीता इति भाषा प्रसिद्धे चित्रव्याघ्रे ॥ चित्रः कायोऽस्य ॥

चित्रकारः । पुं । चित्रकरे ॥ स्थपतेरपिगान्धिक्यां चित्रकारोव्यजायतेति प्र०प० ॥ चित्र करोति । डुकृञ्० कर्मण्यण् ॥

चित्रकूटः । पुं । स्वनाम्ना प्रसिद्धे पर्वतविशेषे ॥

चित्रकृत् । पुं । तिनिशद्रुमे ॥ चित्रकारे ॥ चित्रंकरोति । क्विप् ॥

चित्रकोलः । पुं । वाम्हनीतिख्यातेजन्तौ । ज्येष्ठ्याम् । अञ्जने । स्वनाख्याते ॥

चित्रगन्धम् । न । हरिताले ॥

चित्रगुप्त । पुं । चतुर्दशयमान्तर्गतयमे ॥ यथा । एकोदराय चित्राय चित्रगुप्ताय वैनमः इति ॥ ब्रह्मपादजे यमस्य लेखके ॥ अस्योत्पत्त्यादिराचारनिर्णयसिन्ध्वादवधार्या ॥

चित्रजल्प । पुं । वाक्यविशेषे ॥ यथा । प्रेष्ठस्य सुहृदालोके गूढरोषाभिजृम्भितः । भूरिभावमयो जल्पोयस्तीव्रोत्कण्ठितान्तिमः ॥ चित्रजल्पोदशाङ्गोयं प्रजल्पंपरिजल्पितम् । विजल्पोज्जल्पसंजल्पा अवजल्पोऽभिजल्पितम् ॥ आजल्पः प्रतिजल्पश्च सुजल्पश्चेति कीर्त्तित चित्रमुज्ज्वलनीलमणि. ॥

चित्रतण्डुला । स्त्री । विडङ्गे ॥ चित्रास्तण्डुलाअस्याः ॥

चित्रत्वक् । पुं । भूर्जवृक्षे ॥

चित्रदण्डक । पुं । ओलवृक्षे ॥

चित्रदर्शनम् । न । स्मारके ॥ स्मारकं चित्रदर्शनम् ॥

चित्रदेवी । स्त्री । महेन्द्रवारुण्याम् ॥

चित्रनेत्रा । स्त्री । सारिकाविहगे ॥

चित्रपक्षः । पु । तित्तिरिपक्षिणि ॥ चित्तिरोवाइतिख्याते पाण्डुसंज्ञकेखगे ॥ चित्रपक्षःकफहरो वातघ्नो ग्राहशीतयुत् ॥

चित्रपट । पु । छींट इति प्रसिद्धे वस्त्रे ॥

चित्रपत्रिका । स्त्री । द्रोणपुष्प्याम् ॥ कपित्थपर्ण्याम् ॥

चित्रपर्णी । स्त्री । जलपिप्पल्याम् ॥

चित्रपदा । स्त्री । गोधापदीलतायाम् ॥ अनुष्टुप्सप्तकाष्टाक्षराहत्तिविशेषे ॥ यथा । चित्रपदा यदि भौगौ । यथा । यामुनसैकतदेशे गोपवधूजलकेलौ । कंसरिपो र्गतिलीला चित्रपदाजगदव्यात् ॥ सवैया स्त्रग्गाग्रामपिहत्तौ । यथा । सप्तपदा भगणा' परतो गुरुरत्नगतो लघुको जितदेश चित्रपदेति तदा युधि विक्रमतो धृतवैरिधराधिपकेश । साकथिता धिमक्कवपिङ्गलनागवरे व्यग्रभिनिवेश गौडकुलोज्ज्वलधारवधारय चेतसि हृद्यमलमरेशेति ॥

चित्रपर्णिका । स्त्री । चित्रपर्णीप्रभेदे । त्रिपर्ण्याम् । दीर्घपत्रायाम् ॥

चित्रपर्णी । स्त्री । पृश्निपर्ण्याम् ॥ चित्रपर्णीसंज्ञाः । प्राककर्णोतिडोद ॥ कास्फोटालतायाम् ॥ जलपिप्पल्याम् ॥ द्रोणपुष्प्याम् ॥ मञ्जिष्ठायाम् ॥

चित्रपादा । स्त्री । सारिकापक्षिणि ॥

चित्रपिच्छक । पु । मयूरे ॥

चित्रपुङ्ख । पु । शरे ॥

चित्रपर्णी । स्त्री । कल्पछायाम् ॥

चित्रपृष्ठ' । पु । कलविङ्के । चटके ॥

चित्रफल । पु । चितल इति गौडप्रसिद्धे मत्स्ये ॥

चित्रफला । स्त्री । चिर्भिटायाम् ॥ सृगेर्वारौ ॥ लिङ्गिन्याम् ॥ वार्त्ताक्याम् ॥ कण्टकार्याम् ॥ फलरुनाथ इतिगौड प्रसिद्धे मत्स्ये । राजग्रीवे । फलवल्याम् ॥ बृहदिन्द्रवारुण्याम् ॥

चित्रभानु' । पु । अग्नौ । वैश्वानरे ॥ सूर्ये ॥ चित्रकवृक्षे ॥ भैरवे ॥ चित्राभानवोऽस्य । चुभ्रादित्वात् पूर्वपदादितिणत्वम् ॥ षोडशेवत्सरे ॥ अस्यफलम् । बलकामुक्रमायाचक्र न्यायविदर्भप्रिये । मत्यश्चैजायतेवर्षे चित्रभानौ वरानने ॥

चित्रमेषजा । स्त्री । काकोदुम्बरिकायाम् ॥

चित्रमृग । पु । पृषताख्येमृगे ॥

चित्रमेखल । पु । मयूरे ॥

चित्रयोधी । पु । अर्जुनवृक्षे ॥

चित्ररथः । पु । सूर्ये ॥ गन्धर्वविशेषे ॥

विद्याधरे ॥

चित्रलः । पु । कर्व्वुरवर्णे । किर्म्मीरे ॥ त्रि । तद्युक्ते ॥

चित्रलता । स्त्री । मञ्जिष्ठायाम् ॥

चित्रला । स्त्री । गोरक्षीवृक्षे ॥

चित्रलेखा । स्त्री । अप्सरोविशेषे । बाणासुरसुताया उषायाः सख्याम् । कुम्भाण्डतनयायाम् ॥ धृतिसंख्याष्टादशाक्षरवृत्तिविशेषे ॥ यथा । मन्दाक्रान्ता नयरलघुयुता कीर्त्तिता चित्रलेखा ॥ यथा । अङ्के ऽमुष्मिन् भ्रमति मृगदृशां सारसूपं यदासीदाकृष्टेद्व्रजयुवतिसभा वेधसा सा व्यधायि । नैतादृक्चेत् कथ मुदधिसुता मन्तरेणाच्युतस्य प्रीतस्त्वां नयनयुगल भूश्चित्रलेखाद्भुताभामिति ॥

चित्रलोचना । स्त्री । सारिकायाम् ॥

चित्रवक्त्र' । पु । पाठीनमत्स्ये ॥

चित्रवल्लिक' । पु । वदालमत्स्ये ॥

चित्रवल्ली । स्त्री । मृगेर्व्वारौ ॥ महेन्द्रवारुण्याम् ॥

चित्रवीर्य्यः । पु । रक्तैरण्डे ॥

चित्रशिखण्डिजः । पुं । वृहस्पतौ ॥ चित्रशिखण्डी अङ्गिराः ततो जातः । जनी० । पञ्चम्यामिति डः ॥

चित्रशिखण्डी । पु । सप्तर्षिषु ॥ यथा ॥ मरीचि रङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्चेति सप्तैते ज्ञेया श्चित्रशिखण्डिनः ॥ चित्रशिखण्डश्चूडा विशेषोऽस्त्येषामिति व्युत्पत्त्या प्रत्येकं सप्तापि मरीच्यादय श्चित्रशिखण्डिन' ॥

चित्रशिखण्डिप्रसूतः । पु । वृहस्पतौ ॥

चित्रसर्प्प' । पु । मालुधाने ॥

चित्रसेन' । पुं । ब्रह्मपादजमसीशास्त्र कायस्थस्य चित्रगुप्तादिपितयाभिगीत मूर्त्तिविशेषे ॥ अयञ्चमन्वर्थेशोऽस्य विशेषक. । यथा । चित्रसेने महाचित्रा अगम्येतिगुरोर्मतम् । अथा सन्तोष्य पुत्रादीन् याचित्वा प्राप्य मर्त्त्यं स ॥ राज्यञ्चकार क्षत्त्रियुक्तश्चित्राङ्गदपथोमयः ॥ इत्याचारनिर्णयतन्त्रम् ॥

चित्रा । स्त्री । आखुपर्ण्याम् ॥ गोडुम्बायाम् ॥ सुभद्रायाम् ॥ दन्तिकायाम् ॥ मायायाम् ॥ सर्पविशेषे ॥ नदीविशेषे ॥ अप्सरोविशेषे ॥ मृगेर्व्वारौ ॥ गण्डदूर्व्वायाम् ॥ सुतश्रेण्याम् ॥ मञ्जिष्ठायाम् ॥ वैदिककर्मविशेषे ॥ चतुर्दशे नक्षत्रे ॥ अथ जातफलम् । यथा । प्रतापसन्तापितशत्रुपक्षो दक्षो नये चापि विचित्रवासाः । प्रसूतिकाले यदि यस्य चित्रा बुद्धिर्विचित्रा खलु तस्य जाते ॥

था तथा । चिदाकाशस्य नोदानि मेवाकाश इतिस्थितिः ॥ चित्ताकाश चिदाकाश माकाशञ्च तृतीयकम् । द्वाभ्यां शून्यतरं विद्धि चिदाकाशं महामुने ॥

चिदात्मक. । त्रि । निर्विशेषस्फुरणमात्रस्वरूपे चिदद्वैते ॥ बाध्यते जाग्रति स्वप्नः सुप्ते जाग्रच्च बाध्यते । चिदद्वैतन्तु न क्वापि बाध्यते वास्तवत्वतः ॥ चितो न बाधकं द्वैत चित्प्रसादेन भासनात् । अबाध्यत्वाद्वास्तवत्व चिदद्वैतस्य सुस्थितम् ॥

चिदाभासः । पुं । बुद्ध्यावात्मप्रतिबिम्बे । जीवे ॥ येहिचराचरात्मकेषु शरीरजातेषु नित्यसन्निहित । चिदाभाससेस ॥

चिद्रसमूर्त्तः । त्रि । स्फुरत्सुखपूरिते ॥

चिद्रूप' । त्रि । ज्ञानमये ॥ हृदयालौ ॥

चिन्तनम् । न । कर्त्तव्याकर्त्तव्यचिन्तायाम् ॥ विचारे ॥ चितिस्मृत्याम् । ल्युट् । अन् ॥ स्मरणे ॥

चिन्तयन् । त्रि । ध्यायति ॥

चिन्ता । स्त्री । आध्याने । चिन्तने । स्मृत्याम् ॥ आत्मीययोगक्षेमापायालोचनात्मिकायांबुद्धौ ॥ दर्शनसम्भोगयोः प्रकारभावनायाम् ॥ चिताचिन्ताद्वयोर्मध्ये चिन्तानामगरीयसि । चिताद्हति निर्जीवं सजीवं दहतेऽनया ॥ चिन्तनम् । चिति० । चितिपूजीत्यङ् ॥ चिन्त्यतेऽनया वा ॥ कुलभागत्यघटते चिघञ्च अप्रदातित्य । इति चिन्ता न कर्त्तव्या धनस्य च धनस्य च ॥

चिन्तामणिः । पु । वाञ्छितप्रदे मणिविशेषे ॥ तस्मिन् यद्यच्चिन्त्यते तत्तच्चिन्तोपाधिकमेवावभासते न स्वरूपतस्तथा ॥ स्यमन्तको ॥ यथाचिन्तामणिं स्पृष्ट्वा लोहं काञ्चनतां भजेत् ॥ ब्रह्मणि ॥ आयुरारोग्यमैश्वर्यभोगांश्चैवानुषङ्गिकान् । ददाति ध्यायतां नित्यसर्वकामप्रदो हरिः ॥ मन्त्रविशेषे ॥ यात्रायोगान्तरे ॥ सहजस्थानगोभौमो भाग्यस्थस्सुगुरुस्पति' । चिन्तामणि समाख्योयं कानु सङ्कल्पपूरक ॥ बुद्धविशेषे ॥

चिन्तावेश्म । न । मन्त्रणागृहे । दावंटे ॥

चिन्तित । त्रि । कृतचिन्तने । मनसा विचारिते ॥ यथा । यच्चिन्तितं तदिहदूरतरं प्रयाति यच्चेतसा न गणितं तदिहाभ्युपैति । प्रातर्भवामि वसुधाधिपचक्रवर्त्ती सोऽहं व्रजामि-विपिने जटिलस्तपस्वीति ॥

चिन्तिया । स्त्री । चिन्तायाम् ॥

चिन्तोक्ति । स्त्री । चिन्तावचने ॥

चिन्त्य । त्रि । निरूपणीये । चिन्तितु मर्ह्य । विचारणीये ॥

चिन्त्यमान । त्रि । विचार्यमाणे ॥

चिन्न । पु । चीनाद्देशिख्याते ऽन्नविशेषे ॥ इति शब्दचन्द्रिका ॥

चिन्मय । त्रि । चैतन्यरूपे ॥ चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिण । उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना । रूपस्थानां देवतानां स्त्री पुंसादिककल्पना ॥

चिपिट । पु । चिउरा इति प्रसिद्धे खाद्यभेदे । पृथुके । धान्यचमसे ॥ शालय सतुषा आर्द्रा भृष्टा अस्फुटिताः सन्तः । कुट्टिताश्चिपिटा प्रोक्तास्ते स्मृता पृथुका अपि ॥ शालयो यावनालाश्चाश्चिपिटा पुष्टिवर्द्धना इति च ॥ अरुणभचखविधिनिषेधौ यथा । द्विस्विन्नमन्न पृथुक गुड देशविशेषके । नात्यन्तमस्त विप्राणां भक्षणे च निवेदने ॥ अभक्ष्य सततीनाञ्च विधवाब्रह्मचारिणामिति ब्रह्मवैवर्त्तपुराणम् ॥ आर्द्रसत्याम्पोषे ॥ त्रि । पिट्टितविस्तृते ॥ पिच्चटे ॥ नासिकायानते ॥ इनच्पिटच् चिकचिचेति पिटच् प्रत्यय प्रकृतेश्चिरादेश ॥

चिपिटक । पु । चिपिटे । पृथुके ॥ चिपिटमिव । सञ्ज्ञायाम् इवेतिवा कन् ॥

चिपिटा । स्त्री । गुण्डासिनीतृणे ॥

चिप्प । पुं । क्षुद्ररोगविशेषे ॥ यथा । नखमांस मधिष्ठाय वात.पित्तञ्च देहिनाम् । कुर्वाते दाहपाकौ च तत्र व्याधिं चिप्प मादिशेदिति ॥

चिमि । पु । शुकखगे ॥ पट्टवृक्षे ॥

चिमिक । पु । शुकपक्षिणि ॥

चिमिचिम । पु । अङ्गसंव्यथाविशेषे ॥ कण्डूविशेषे । स्पर्शप्रियतायाम् ॥

चिरम् । न । अव्यादि (।ऽ)चिकले ॥ दीर्घकाले ॥ त्रि । तद्वति ॥

चिरकारी । त्रि । चिरक्रिये ॥

चिरकाल । पु । दीर्घकाले । दीर्घराघे ॥

चिरक्रिय । त्रि । दीर्घसूत्रे । अतिविलम्बेन क्रियासम्पादके ॥ चिरा क्रिया यस्य ॥

चिरजीवक । पु । जीवकद्रुमे ॥

चिरजीवी । पु । काके ॥ विष्णौ ॥ जीवकवृक्षे ॥ शाल्मलितरौ ॥ अश्वत्थामादिषु ॥ अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषण. । कृप परशुरामश्च सप्तैते चिरजीविन ॥ त्रि । बहुकालजीविनि ॥

चिरञ्जीवी । पु । विष्णौ ॥ काके ॥ जी

बर्ष इ० ॥ प्राक्समिरिह० ॥ त्रि । चिरजीविनि ॥

चिरण्टः । पु । यौवने ॥

चिरण्टी । स्त्री । प्राप्तयौवनायांपितृगेहस्थायाम् । सुवासिन्याम् ॥ चिरेण अटति पितृगेहाद्भर्तृगेहम् । अट गतौ । अच् । पृषोदरादि । वयस्य चरमइतिङीप् ॥ तरुण्याम् । द्वितीयवयःस्थायाम् ॥

चिरतिक्तः । पुं । चिरायता इतिप्रसिद्धे भूनिम्बे । किराततिक्ते ॥

चिरत्न । त्रि । पुरातने । चिरन्तने ॥ चिरेभव । चिरशब्दात्परारिभ्यांत्नो वक्तव्य ॥

चिरन्तन । त्रि । पुरातने ॥ चिरेभवे । सायञ्चिरमितिट्युट्युलौ । निपातनान्मान्तत्वम् ॥

चिरपाकी । पु । कपित्थे ॥

चिरपुष्प । पु । बकुलाऽऽसने ॥

चिरप्रसूता । स्त्री । बष्कयिण्याम् ॥ चिरप्रसूता । सुप्सुपेतिसमास ॥

चिरम् । अ । बहुकालार्थे । चिराय ॥

चिरमेही । पु । गर्दभे ॥

चिरबिल्व । पु । चिल्ले ॥

चिररात्रम् । न । दीर्घकाले ॥

चिररात्राय । अ । दीर्घकाले ॥ चिररात्राय । अचुप्रत्ययमन्वेत्यचाजिति योगविभागादच् । चिररात्रान्मय ते । अय० । कर्मस्थम् ॥

चिरलोकपितर । पुं भूम्नि । अग्निष्वात्तादिषु ॥ अग्निष्वात्तादयोलोकेपितरश्चिरवासिन' ॥

चिरविल्व । पु । करञ्जवृक्षे ॥ चिरं विलति । विलभेदने । वाहुलकात्क्व. ॥

चिरसूता । स्त्री । बष्कयिण्याम् ॥

चिरसूतिका । स्त्री । बष्कयिण्याम् ॥

चिरस्य । अ । दीर्घकाले ॥ चिरमस्यति । असु० । क्यत् । संज्ञापूर्वकत्वाद्वृद्ध्यभावः । ष० ॥

चिरा । स्त्री । बहुकालसाध्यायाम् ॥

चिराटिका । स्त्री । श्वेतपुनर्नवायाम् ॥ पालाजी इतिगौडभाषाप्रसिद्धचटिकायाम् ॥

चिरात् । अ । दीर्घकाले ॥

चिरात् । पु । गरुडे ॥

चिरातिक्त' । पु । चिरतिक्ते ॥

चिराय । अ । दीर्घकाले ॥ चिरमयते । अय० । कर्मण्यण् ॥

चिरायुः । पु । विबुधे । देवतायाम् ॥ त्रि । चिरजीविनि ॥ चिरमायुर्यस्य ॥ भवति यदि मनुष्यो गुर्वधीनश्चिरायुरित्यागम ॥

चिरायय । पुं । अश्वादि(।ऽ)त्रिकेषु ॥

ज्यौत्स्निका । स्त्री । चन्द्रिकायुक्तायां रात्रौ ॥ पटोल्याम् ॥
ज्यौत्स्नी । स्त्री । ज्योत्स्नया युक्तायां रात्रौ ॥ ज्योत्स्न्याम् ॥ अणन्तत्वान्ङीप् ॥
ज्वर. । पु । स्वनाम्ना प्रसिद्धे रोगे । जूर्त्तौ । रोगश्रेष्ठ । महागदे ॥ तस्योत्पत्ति. संख्याचोक्ता भिषग्भि । दक्षापमानसंक्रुद्धरुद्रनिश्वाससम्भव' । ज्वरोऽष्टधा पृथग्द्वन्द्व संघातागन्तुज. स्मृतइति ॥ तथाहि । वातिक. पैत्तिकश्चैव कफजो वातपित्तज' । वातश्लेष्मप्रभूतश्च पित्तश्लेष्मोद्भवस्तथा ॥ संघातागन्तुजा चैव ज्वरोऽष्टविधउच्यत इति ॥ अपिच । जनक सर्वरोगाणां दुर्वारो दारुणो ज्वर' । शिवभक्तश्च योगीच सएव विकृताकृति. ॥ भीमस्त्रिपादस्त्रिशिरा. षड्भुजोनवलोचन: । भस्मप्रहरणो रौद्र. कालान्तकयमोपम' ॥ मन्दाग्निस्तस्यजनको मान्द्यमेजेमकात्मय' । पित्तश्लेष्मसमीराश्च प्राणिनां दुखदायका: ॥ इत्यादि वैद्यशास्त्रतो विशेषोऽवगन्तव्य ॥ ज्वरणम् । ज्वररोगे । घञ् । संज्ञापूर्वकत्वात् वृद्ध्यभाव ॥ ज्वरति । अच् वा ॥ सन्तापहेतुत्वात्कोपे ॥ ज्वरमुक्तस्य लक्षणं यथा । स्वेदो लघुत्वं शिरस. कण्डू पाको मुखस्यच । क्षवथुश्चान्नलिप्साच ज्वरमुक्तस्य लक्षणम् ॥
ज्वरघ्न । पु । गुडूच्याम् ॥ वास्तूके ॥ त्रि । ज्वरनाशके ॥
ज्वरघ्नी । स्त्री । } मञ्जिष्ठायाम् ॥
ज्वरहन्त्री । स्त्री । }
ज्वराग्नि' । पु । आधिमन्थवे । ज्वररूपाग्नौ ॥
ज्वराङ्गी । स्त्री । भद्रदन्तिकायाम् ॥
ज्वरान्तक: । पु । नेपालनिम्बे ॥ आरग्वधे ॥ औषधविशेषे ॥ त्रि । ज्वरनाशके ॥
ज्वरापहा । स्त्री । बिल्वशुण्ठ्याम् । बिल्वपत्र्याम् ॥ त्रि । ज्वरनाशके ॥
ज्वरारि: । पुं । ज्वरघ्नौषधविशेषे ॥
ज्वरित. । त्रि । ज्वरिणि ॥ ज्वर. सञ्जातोस्य । तारकादित्वादितच् ॥
ज्वरी । त्रि । ज्वरयुक्त ॥ गुर्वभिष्यन्दिकाले वा ज्वरीनाद्यात् कथञ्चन ॥
ज्वल. । पु । ज्वाले । दीप्तौ ॥ त्रि । दीप्तिविशिष्ट ॥ ज्वलति । ज्वलदीप्तौ । अच् ॥
ज्वलका' । स्त्री । अग्निशिखायाम् ॥ इतिहेमचन्द्र: ॥
ज्वलत् । त्रि । दीप्तिमति ॥
ज्वलन: । पु । अग्नौ ॥ चित्रकवृक्षे ॥ न । दहने ॥ ज्वलति । ज्वल० । जुच

उक्तम्यदन्द्रम्यस्तृणधिज्वलगुचलसप- तपद. इति ताच्छीस्यादिषु युच् ॥
ज्वलनाश्मा । पु । सूर्यकान्तमणौ ॥
ज्वलित' । त्रि । दग्धे ॥ उज्ज्वले ॥ भा स्वरे ॥ उज्ज्वलिते ॥ ज्वल० । क्त ॥
ज्वलिनी । स्त्री । मूर्वालतायाम् ॥
ज्वाल । पु । अग्निशिखायाम् ॥ त्रि । दीप्तिविशिष्टे ॥ ज्वलति । ज्वल० । ज्वलि तकसन्तेभ्योणा. ॥
ज्वाला । स्त्री । अग्निशिखायाम् ॥ टाप् ॥
ज्वालागर्दभक' । पुं । जालगर्दभरोगे ॥
ज्वालाजिह्व । पुं । अग्नौ ॥
ज्वालामरिचम् । न । रक्तमरिचे । पिपली लालमरिच इत्यादि भाषा ॥
ज्वालामुखी । स्त्री । जालन्धरपीठान्त र्गतपीठस्थानविशेषे ॥ तत्रभगवत्या जिह्वापतिता । तत्राम्बिकादेवी । उन्मत्तनामको भैरवश्च ॥ तथाहि । ज्वालामुख्या महाजिह्वा देव उन्म- त्तभैरव । अम्बिका सिद्धिदानाम्नी स्तन जालन्धरे ममेति तन्त्रचूडाम णि. ॥ देव्यन्तरे ॥ ज्वालामुखयस्या ॥
ज्वालिका । स्त्री । ज्वालायाम् । जाल इतिभाषा ॥

झ

-----

झ । पु । झञ्झीशे ॥ सुरगुरौ ॥ दै- त्यराजे ॥ ध्वनौ ॥ झञ्झावाते । झंखड इतिख्याते । प्रचण्डानिले ॥ वृष्टौ ॥ चि । नष्टवसुनि ॥
झगझगायमान । त्रि । चाकचिक्य युक्ते ॥
झगिति । अ । शैघ्र्ये ॥
झङ्कार । पु । भ्रमरादिसमूहशब्दे ॥
झङ्कृति । पु । कांस्यतालादिध्वनौ ॥
झञ्झा । स्त्री । वाते ॥ तारवाद्यौ ॥ नष्टे ॥ ध्वनिविशेषे ॥ अम्बुकणावर्षेण ॥
झञ्झानिल । पु । प्रावृषिकवायौ ॥
झञ्झावात । पु । झञ्झानिले ॥
झटा । स्त्री । भूम्यामलक्याम् । वितु- न्नकौषधौ ॥ झट्यते । झटसङ्घाते । घञ् । शाखापूर्वकत्वाद्वृद्धि ॥
झटि । पु । क्षुद्रवृक्षे ॥ झट० । इन् ॥
झटिति । अ । शीघ्रार्थे । तत्क्षणार्थे ॥ झट० । सम्पदादित्वात् क्विप् । झट मेति । इण० । क्तिच् ॥
झणत्कार । पु । } कङ्कणादिध्वने र-
झनत्कार' । पु । } नुकरणशब्दे ॥
झम्प । पु । सम्पातपतने । लम्फे ॥ स्वे च्छाधीनपतने ॥
झम्पाक । पु । वानरे ॥
झम्पाशी । पु । मत्स्यरङ्गविहङ्गमे ॥
झम्पी । पु । वानरे ॥

जर । पुं । निर्झरे । उत्सान्निर्गते गिरिवारि प्रवाहे ॥ जरणम् । जृष वयोहानौ । कदोरप् ॥

जरा । स्त्री । जरे । निर्झरे ॥ पित्वादङ् ॥

जरि । स्त्री । जरे ॥ जरणम् । जृष० । अचइ ॥

जरी । स्त्री । गिरिवारिप्रवाहे ॥ कृदिकारादितिकीष् ॥

जर्झरः । पुं । कलियुगे ॥ वाद्यभाण्ड विशेषे । भडीजाँज इतिभाषा ॥ गौडास्तु चर्मपुटाच्छादितकाष्ठस्थाने इति वरड इतिख्यातेच । डिण्डिमोऽडझरी प्रोक्तो जर्झर पटहः स्मृत' । इति तत्पर्याया । झल्लकी झल्ली जधरी जर्झरी इतिशब्दरत्नावलीच्याहु ॥

नेपालभाषया झ्याली इति प्रसिद्धे कांस्यवाद्ये ॥ नदविशेषे ॥ जझर इति प्रसिद्धे जलपात्र विशेषे ॥ जरया जर्ना इतिच ख्याते पाकसाधने लोहद्रव्ये ॥ जर्झ इति शब्दं राति । आतोऽनुपेतिक ॥ यद्वा । जर्झति । जर्झ परिभाषणभर्त्सनयो । बाहुलका दर' ॥

जर्झरकः । पु । कलियुगे ॥ शब्दार्थ बोधकेषु, जर्झरशब्दार्थेषु ॥ क. ॥

जर्झरा । स्त्री । वेश्यायाम् ॥

जर्झरिका । स्त्री । रोटिकाविशेषे ॥ यथा । धूमसीरचिता रोटी प्रोक्ता जर्झरिकाबुधै । जर्झरी कफपित्तघ्नी किञ्चिद्वातकरीस्मृतेति ॥

जर्झरी । स्त्री । जर्झरवाद्ये ॥ जझरी इति ख्याते स्वल्पेशरिपात्रे ॥ धूमसी रोटिकायाम् ॥

जर्झरीकः । पु । न । शरीरे ॥ जर्झति । जर्झपरिभाषणभर्त्सनयो । पर्फरीकादित्वात् साधु. ॥

जलजला । स्त्री । हस्तिकर्णास्फालने ॥

जधरी । स्त्री । हुडुके । जर्झरवाद्ये ॥ वाद्यकुम्भले । केशपक्षे ॥

जला । स्त्री । आतपज्योर्मौ ॥ कन्यायाम् ॥

जल्ल । पु । ब्रात्यात् क्षत्रियात् सवर्णायामुत्पन्नैवर्णसङ्करजातिविशेषे ॥ करणे । मल्ले ॥ भाँड इति प्रख्याते प्रहासके ॥

झल्लकम् । न । कांस्यनिष्पन्ने करताले ॥ यथा । शिवागारे झल्लकञ्च सूर्यागारेच शङ्खकम् । दुर्गागारे वंशिवाद्य मधुरीञ्च न वादयेत् ॥

झल्लकण्ठ. । पु । कपोते ॥

झल्लरी । स्त्री । हुडुक्कवाद्ये ॥ वक्रकेशेषु ॥ जर्झते । जर्झ° । बाहुलकाद्-रन् । पृषोदरादि । गौरादित्वात्

डाप् ॥ युद्धे ॥ क्लदे ॥

झल्लिका । स्त्री । उद्वर्तनमले । झिल्ली इति भाषा ॥ द्योते ॥ दीप्तौ । आतपच्छै ॥

झल्ली । स्त्री । झर्झरवाद्ये ॥

झल्लोल. । पु । तर्कुलासके । चरखा इति भाषा ॥

झष । पु । मत्स्ये । मीने ॥ मीनराशौ ॥ तापे ॥ अटव्याम् ॥ न । खिले ॥ झषति । झष हिंसार्थे । पचाद्यच् ॥ यद्वा । झष्यते । खनोघचेति घ. ॥

झषकेतन. । पु । } कामदेवे । मदने ॥ झषोमकरः केतनं केतुर्वा यस्य ॥
झषकेतु । पु । }

झषा । स्त्री । नागबलायाम् ॥ टाप् ॥

झषाङ्क । पु । अनिरुद्धे । कन्दर्पे ॥

झषाशन । पु । शिशुमारे ॥ त्रि । मत्स्यादे ॥

झषोदरी । स्त्री । व्यासमातरि ॥

झाङ्कृतम् । न । चरणालङ्कारविशेषे ॥

झाट. । पु । निकुञ्जे ॥ कान्तारे ॥ व्रणादीनां मार्जने ॥ न । सङ्घाते ॥ झटनम् । झट० । घञ् ॥

झाटल । पु । घण्टापाटलौ । लोध्रविशेषे ॥ झाट सङ्घातं लाति । ला० । आतोनुपेति क ॥

झाटलि. । पु । स्त्री । आटलिवृक्षे ॥

झाटा । स्त्री । भूम्यामलक्याम् ॥ यूथीवृक्षे ॥ झट्यते । झटसङ्घाते । घञ् ॥

झाटामला । स्त्री । }
झाटिका । स्त्री । } भूम्यामलक्याम् ॥
झाटी । स्त्री । }

झामकम् । न । दग्धेष्टकाविशेषे । झामा इति झांवां इतिच भाषा ॥

झामरः । पु । तर्कुशाणे । तकुवेकीसाण इतिभाषा ॥

झार्झर । त्रि । झार्झरिके । झर्झरवाद्यकर्त्तरि ॥ झर्झरवादनं शिल्पमस्य । मड्डुकझर्झरादन्यतरस्यामित्यण् ॥

झार्झरिक । त्रि । झार्झरे ॥ झर्झरवादनं शिल्पमस्य । पक्षेठक् ॥

झालि' । स्त्री । पानकविशेषे ॥ यथा । आम्रमामफलं पिष्टं राजिकालवणान्वितम् । भृष्टहिङ्गुयुतं पूतं घोलितं झालिरुच्यते ॥ झालिर्हरतिजिह्वाया' कुण्ठत्वं कण्ठशोधिनी । मन्दं मन्दं निपीता सा रोचनी वह्निबोधिनी ॥

झाबु. । पु । झाउ इतिश्रुते पिचुलवृक्षे ॥ झामितिशब्दं वेति गच्छति । वी गत्यादिषु । मित० डु ॥

झाबुक । पु । पिचुले । झाउ इतिभाषा ॥ संज्ञायांकन् ॥

जिल्लिका | जोङः

जिङ्गाकम् । न । फलविशेषे ॥

जिङ्गिनी । स्त्री । उल्कायाम् ॥ जिङ्गिनीवृक्षे ॥

जिङ्गी । स्त्री । जिङ्गिनीवृक्षे ॥

जिञ्जिम. । पु । दावाग्नौ ॥

जिञ्जिरिटा । स्त्री । जिञ्झिरी इतिगौडप्रसिद्धे क्षुपविशेषे । पीतपुष्पायाम् । रोमाश्रयफलायाम् ॥

जिञ्जी । स्त्री । जिह्वायाम् ॥ यथा । जिञ्जावाऽव्यक्तमधुरा कूजन्ती मधुराकृतिरित्यागम. ॥

जिण्टिका । स्त्री । झिण्ट्याम् ॥ कन् ॥

जिण्टी । स्त्री । सैरीयके ॥ झिमिति रटति । रट० । अच् । पृषोदरादि. । गौरादित्वान्ङीष् ॥ अस्यागुणा' । कटुत्वम् । तिक्तत्वम् । दन्तामयशूलवातकफशोफकासत्वग्दोषनाशित्वञ्चेतिराजनिर्घण्ट. ॥ कुन्दरवृक्षे ॥

जिरिका । स्त्री । }
जिरी । स्त्री । } जिह्वायाम् । झींगुर इ० झींगर इतिचभाषा ॥
जिरीका । स्त्री । }

जिल्लि । स्त्री । वाद्यविशेषे ॥ यथा । घण्टा शङ्खस्तथा भेरीमृदङ्गो झिल्लिरेव च । पञ्चानां शस्यते वाद्यं देवताराधनेषु चेतिगूढार्थदीपिका ॥

जिल्लिका । स्त्री । जिल्लीकायाम् । चीर्याम् ॥ उद्वर्त्तनांशुके ॥ आतपत्विषौ ॥ विलेपनस्यमले ॥ स्वार्थेकन् ॥

जिल्ली । स्त्री । कीटविशेषे । झींगर इति भाषाप्रसिद्धे । झिरिकायाम् । चीर्याम् ॥ आतपत्विषि ॥ वर्त्याम् ॥ उद्वर्त्तनांशुके ॥ स्थालीलग्नदग्धान्ने ॥ चिल्लति । चिल्लशैथिल्ये । अच् । पृषोदरादित्वा त्स्वरूप. । गौरादित्वान् ङीष् ॥

जिल्लीकण्ठ । पु । गृहकपोते ॥

जिल्लीका । स्त्री । जिल्लिकार्थेषु ॥

जीरका । स्त्री । जिह्वायाम् । झींगुर इति भाषा । झीतिरौति । कृशब्दे । बाहुलकात् कक् ॥

जुण्ट' । पु । अप्रकाण्डद्रुमे । स्तम्बे । गुल्मे । झुण्ड इति भाषा ॥

जुमरि । स्त्री । रागिणीविशेषे ॥ यथा । प्राय शृङ्गारबहुला माध्वीकमधुरा मृदु' । एकैव झुमरिर्लोके वर्णादिनियमोज्झिता ॥ अतो लक्षणमेतस्या नोदाहारि विशेषकम् । इदञ्च गूर्जरी ष्वप्रसिद्ध मपरञ्जनम् ॥ इति सङ्गीतदामोदर. ॥

जूषिः । स्त्री । क्रमुकभेदे ॥ दुष्टदैवभूतौ ॥

जोडः । पु । गुवाकवृक्षे ॥ इति भूरिप्रयोगः ॥

अ

अ । पु । अकारे ॥ बलीवर्दे ॥ शुक्रे ॥ वामनतौ ॥ गायने ॥ घर्घरध्वनौ ॥ *॥*॥ इत्यादिगौडकुलोत्पन्नाडी चवालप्रधानोपनामतुलाराममिश्रात्मजश्रीधनपतिमिश्रापरनाम्ना तथाश्रीसद्गुरुकुलावधूतश्रीपरमहंसपरिव्राजकाचार्यश्रीमद्धरिहरानन्दनाथभारतिशिष्येण ब्राह्मावधूतश्रीसुखानन्दनाथपरनामधेयेन विरचिते शब्दार्थचिन्तामणौ चवर्गं समाप्तिकृत ॥ १ ॥

तत् सत्

ट

ट । पु । टकारे ॥ वामने ॥ पादे ॥ निस्वने ॥ न । करङ्के ॥ टङ्कारे ॥ टगणे ॥

टक्कदेशीय. । पु । शालूकशाके ॥ इति त्रिकाण्डशेष ॥

टक्कनामान. । पु भूम्नि । देशविशेषे । वाहीकेषु ॥ वाहीकाष्टक्कनामान इति हेमचन्द्र ॥

टगण । पु । त्रयोदशभेदभिन्नेषाण्मात्रिके । यथा । (ऽऽऽशिव १ ) (॥ऽऽशशि २) (।ऽ।ऽदिनपति ३) (ऽ॥ऽ सुरपति ४) (॥॥ऽशेष ५) (।ऽऽ। अहि ६) (ऽ।ऽ। सरोजम् ७) (॥ऽ। धाता ८) (ऽऽ॥ कलि ९) (॥ऽ॥ चन्द्र १०) (।ऽ॥ ध्रुव ११) (ऽ॥॥ धर्म. १२ ) (॥॥॥ शालिकर १३ ) इति षण्मात्रे त्रयोदशभेदा ॥

टगर । पु । टङ्कणक्षारे ॥ हेलाविभ्रमगोचरे ॥ त्रि । केकराक्षे ॥

टङ्क । पु । कोपे ॥ असिकोशे ॥ खड्गे ॥ ग्रावदारणे । टाँकी इति भाषा ॥ चतुर्माषकस्वरूपेमाने । चतुर्विंशतिरक्तिकारूपे वा ॥ दर्पे ॥ परशौ ॥ राजाम्रे ॥ पु । न । नीलकपित्थे ॥ खनित्रे ॥ टङ्कने ॥ टङ्कयति । टकि बन्धे । चुरादि । अच् ॥ टम् इति शब्दं कायति वा । कै० । आतोऽनुपेतिक सुपीति वा ॥

टङ्कक । पु । रजतमुद्रायाम् । रूप्या इति भाषा इत्यमरटीकासारसुन्दरी ॥

टङ्कपति । पु । रूप्याध्यक्षे ॥

टङ्कशाला । स्त्री । रजतमुद्रागृहे । टकशाल इति भाषा ॥ इत्यमरटीकासारसुन्दरी ॥

टङ्कटीक । पु । शिवे ॥ इतित्रिकाण्ड शेष. ॥

टङ्कण । पु । न । रसशोधने । मालती तीरजे । लोहद्रावित्रि । सुहागा इति प्रसिद्धे क्षारे ॥ टङ्कण वह्निकृद्रूक्ष कफघ्न वातपित्तकृत् ॥ टङ्कयते ल्युट् । पृषोदरादि ॥

टङ्कनम् । न । टङ्कणे ॥

टङ्का । स्त्री । जङ्घायाम् । टाँग इति भाषा इतिमेदिनी ॥

टङ्कानक । पु । श्लेष्मदारुवृक्षे ॥

टङ्कार । पु । विस्मये ॥ प्रसिद्धौ ॥ शिञ्जिनीध्वनौ ॥ टमितिशब्द करोति । कृ० । अण् ॥

टङ्कारी । स्त्री । ठेकारी इति गौड प्रसिद्धे क्षुपविशेषे ॥ टङ्कारी वातजित् तिक्ता श्लेष्मघ्नी दीपनी लघु । शोथोदरव्यथाहन्त्री हिता पीठ विसर्पिणाम ॥

टङ्क । पुं । न । खनित्रे ॥ खड्ग विशेषे । असौ ॥ जङ्घायाम् । टाग इतिभाषा ॥

टङ्गण । पु । न । }
टङ्गन । पु । न । } टङ्कणे ॥ इति राजवल्लभ ॥

टङ्गिनी । स्त्री । पाठायाम् । अम्बष्ठायाम् । आकनादी इति गौडभाषा ॥

टट्टनी । स्त्री । ज्येष्ठ्याम् । छिपकली इतिविस्तुय्या इतिचभाषा ॥

टट्टरी । स्त्री । अनृताख्याने । मृषावादे । टरटर इति भाषा ॥ लम्पावाद्ये ॥ पटहवाद्ये ॥

टट्टर । पुं । भेरीरावे ॥

टलनम् । न । विक्लवे ॥

टवर्ग । पु । टादिपञ्चवर्णेषु ॥

टवर्गीय । पुं । टवर्गभवेवर्णे । वर्गान्ताश्चेतिच्छ. ॥

टा । स्त्री । पृथिव्याम् ॥

टाङ्कम् । न । मद्यप्रभेदे ॥

टाङ्कर । पु । नागवीटे ॥

टार । पु । रङ्गे ॥ तुरङ्गे ॥ खङ्गे ॥

टिटिभ । पु । }
टिटिभक । पु । } टिट्टिभे ॥

टिट्टिभ । पु । टटीहरी इति भाषा प्रसिद्धे कोयष्टिखगे । टीटि इति गौड भाषा ॥ टिट्टि शब्द भाषते । टिट्टि शब्देन भाति वा । अन्येभ्योपीतिड ॥ दानवविशेषे ॥

टिट्टिभक । पु । कोयष्टिके । टिट्टिभे ॥ स्वार्थे कन् ॥

टिट्टिभिका । स्त्री । अम्बुशिरीषिकायाम ॥

टिण्डिश, । पु । डिंडसी इतिटिण्डा इति चभाषाप्रसिद्धे फलशाकविशेषे । मुनिनिर्मिते । रोमशफले । डिण्डिशे ॥

टिप्पनी । स्त्री । टीकायाम् ॥

टीका । स्त्री । विषमपदव्याख्यायाम् ॥ वृत्तौ ॥ व्याख्यामात्रे ॥ टीक्यते गम्यतेऽर्थोऽनया । टीकृगतौ । गुरोश्च हलइत्य । टाप् ॥

टुण्टुक । पु । श्योनाकवृक्षे ॥ कृष्णख दिरवृक्षे ॥ टुण्टुनि इति गौडप्रसिद्धे पक्षिविशेषे ॥ श्योनाकप्रभेदे ॥ त्रि । अल्पे ॥ टुण्टु इति कायति । कै० । आत इतिक ॥

टुनाका । स्त्री । तालमूल्याम् ॥

टेर । त्रि । वक्रचक्षुषि । टेरके ॥

टेरक । त्रि । वलिरे । केकरे । वक्रचक्षुषि । भैंगा इति भेडा इतिचभाषा ॥

## ठ

ठ । पु । ठकारे ॥ मण्डले ॥ चन्द्रबिम्बे ॥ शून्ये ॥ लोकगोचरे ॥ महेश्वरे ॥ ध्वहङ्कनौ ॥ ठगणे ॥ पु । न । अनुकरणशब्दे ॥

ठक्कर । पु । विष्णुप्रतिमायाम् । ठाकुर इतिभाषा ॥ द्विजोपाधिविशेषे ॥ यथा । त्वसिहठक्कुर ॥ चद्रपालठक्कुर इति ॥

ठगण । पु । अष्टभेदभिन्ने पञ्चमात्रिके ॥ यथा (।ऽऽ इन्द्रासनम् १) (ऽ।ऽ सूर २) (।।।ऽ चाप ३) (ऽऽ। हीर ४) (।।ऽ। शेखरम् ५) (ऽ।।। कुसुमम् ६) [ऽ।। अहिगण ७] ॥।।। पापगण ८] इति ॥

ठठम् । अ । } अनुकरणशब्दे । ठठठम् । अ । } न् ठन् इति ठनन् ठनन्इतिचभाषा ॥ यथा । रामाभिषेके मदविह्वलाया' कक्षाच्च्युतो हेमघट स्तरुण्या । सोपान मासाद्य चकारशब्द ठठं ठठ ठ ठठठ ठठ ठ ॥ इतिमहानाटकम् ॥

## ड

ड । पु । डकारे ॥ वाडवाग्नौ ॥ शिवे ॥ शब्दे ॥ त्रासे ॥ डगणे ॥

डगण । पु । पञ्चभेदभिन्ने चतुर्मात्रिके ॥ यथा [ऽऽ गज १] [।।ऽ रथ २] [।ऽ। तुरङ्गम ३] [ऽ।। पदाति ४] (।।।। पत्ति ५] इति ॥

डङ्कर । पु । डिङ्करे ॥

डङ्गरी । स्त्री । गजदन्तफलायाम् । दीर्घेर्वारौम् । ककडीइति तरा इतिच भाषा ॥

डङ्गारी। स्त्री। डङ्गरीफले ॥

डण्ड। पु। डण्डारीतिख्याते मत्स्ये ॥ डण्डमत्स्यो रसे तिक्तः पित्त रक्त कफ हरेत्। वातसाधारणः प्रोक्तः शुक्लो बलवर्द्धनः ॥

डम। पु। चाण्डाल्या लेटाज्जाते डोम इति प्रसिद्धे ऽन्त्यजे ॥

डमर.। पु। अशस्त्रकलहे ॥ विप्लवे। धाकडलुटनादौ। डाका इतिधाडा इतिचभाषा ॥ परचक्रादिभये ॥ न। भीत्यापलायने। शृगालिकायाम् ॥ डम इतिशब्दस्य रानम्। रा०। वाहुलकात् घञर्थेक ॥

डमरु। पु। वाद्यप्रभेदे। कापालिकयोगिवाद्य ॥ चमत्कारे ॥ डमिति शब्द मियर्त्ति। मृगय्वादित्वादर्त्तेः कु। गणपाठादेवगुणः ॥

डयनम्। न। पुरुषस्कन्धवाह्ये यानविशेषे। कर्णीरथे। चौडोल इतिख्याते ॥ डीयते ऽनेन। डीङ् विहायसागतौ। ल्युट् ॥ नभोगतौ ॥

डल्लकम्। न। वंशादिरचितेपात्र विशेषे। डगरा डाला छबडा छाबी इतिभाषा ॥ त्रिशतञ्च षष्ट्यधिक डल्लक वस्त्रसंयुतम्। सभोज्य सोपवीतञ्च सोपहारं मनोहर मितिब्रह्मवैवर्त्तप्रकृतिखण्डम् ॥

डवित्थ। पु। काष्ठमये मृगे ॥ डित्थ. काष्ठमयो हस्ती डवित्थस्तन्मयो मृगइति सुपद्मव्याकरणोक्ते ॥

डहु। पु। लकुचे। लिकुचे। वडहल इतिप्रसिद्धेवृक्षे ॥ दहति तोहति वा। दहभस्मीकरणे। तुहिर् अर्दने वा। मृगय्वादिषु निपातित ॥

डा। स्त्री। डाकिन्याम ॥

डाकिनी। स्त्री। कालीगणविशेषे ॥ डाकानासमूहे ॥ खलादिल्वादिनि ॥

डाङ्गरी। स्त्री। डङ्गरीफले ॥

डामर। पु। चमत्कारे ॥ शिवोक्त षड्विधे शास्त्रविशेषे ॥ तेषांनामानि श्लोकसङ्ख्याश्चोक्तावाराहीतन्त्रे। यथा। डामर षड्विधोज्ञेय प्रथमो योगडामर। श्लोकास्तत्रत्रयस्त्रिंशत् तथापञ्चशतानिच। त्रिविंशतिसहस्राणि श्लोकानिचेहसङ्ख्यया ॥ १ ॥ एकादशसहस्राणि सङ्ख्याता' शिवडामरे। श्लोका सप्तैवनिश्चित्य ईश्वरेणैवभाषिता ॥ २ ॥ तावच्छ्लोकसहस्राणि पञ्चश्लोकशतानि च। गुणोत्तराणि दुर्गायाडामरे कथितानिच ॥ ३ ॥ नवश्लोकसहस्राणि नवश्लोकशतानिच। सारस्वते तथा श्लोकाः पञ्चैवपरिकीर्त्तिताः ॥ ४ ॥ स्वरसङ्ख्यासहस्राणि श्लोका

ना ब्रह्मडामरे। पञ्चोत्तरशतान्यत्र सङ्ख्यातानिशिवेनतु ॥ ५ ॥ षष्टि श्लोकसहस्राणि गान्धर्वडामरोत्त मे। श्लोकाश्चषष्टिसङ्ख्याता ब्रह्म णाव्यक्तयोनिनेति ॥ तथाहि। यो गडामर २३५३३ । शिवडामर- ११००७। दुर्गाडामर ११५०३। सा रस्वतडामर ९९०५। ब्रह्मडामर ७१०५। गन्धर्वडामर. ६००६० ॥ इति ॥ भूतडामराद्यो ऽन्येपिसन्ति। भूतानांडामरश्चमत्कारो ऽत्रेतिनि बन्धकार ॥ डमरे ॥

डाहल । पु। चैद्य। चैपुरेदेशे ॥

डाहुक । पु। दात्यूहखगे ॥

डिङ्करी। स्त्री। दिङ्कर्याम् ॥

डिङ्गर. । पु। डङ्गरे ॥ क्षेपे ॥ खले ॥ धूर्ते ॥ सेवके ॥

डिण्डिभाण्डम्। न। वादित्रविशेषे ॥ पटहमृदङ्गकरटा. समेता यत्र वाद्य न्ते तानि डिण्डिभाण्डानीतिव्याख्या नात् ॥

डिण्डिम । पु। डौंडी इतिख्याते वा द्यभेदे ॥ यथा। श्लोकार्द्धेनच यत् प्रोक्तं तदुक्तं ग्रन्थकोटिभि ॥ ब्रह्म सत्यं जगन्मिथ्येत्येषवेदान्तडिण्डिम ॥ गजघण्टानादे ॥ यथा। मतिरेव बला गरीयसी तदभावे करिणामि य दृशा। इतिघोषयतीव डिण्डिम. करिणो हस्तिपकाहत क्वणन् ॥ पा नीयामलके ॥ डिण्डि इतिशब्दं- मिनोति प्रकाशयति। डुमिञ्०। ड ॥

डिण्डिर. । पु। समुद्रफेने ॥

डिण्डिश । पु। डिण्डसी ढेढस टिण्डा इत्यादि भाषाप्रसिद्धे मुनिनिर्मि- ते। रोमशफले ॥ डिण्डिशो रुचि कृ द्भेदी पित्तश्लेष्मापहः स्मृत । सु शीतो वातलो रूक्षो मूत्रलश्चाश्म रीहर ॥ * ॥ निश्शेषवीज स्वतिवृ त्तखण्ड सहिङ्गुक प्रोज्झितचण्डश ब्दम्। स्नेहप्रतप्त चलदर्विदण्ड क चित्प्रद डिण्डिशक सपिण्डम् ॥

डिण्डीर । पु। अब्धिकफे। समुद्रफे- ने ॥ डिण्डि इतिशब्दम् ईरयति। ई रगतौ कम्पनेच। अण् अखला ॥

डिण्डीरमोदकम्। न। गृञ्जने ॥

डित्थ. । पु। काष्ठमये गजे ॥ डित्थ काष्ठमयो हस्ती डवित्थस्तन्मयो मृ गइतिसुपद्मव्याकरणोक्तो ॥ विशेष लक्षणयुक्तेपुरुषे ॥ यथा। श्यामरू पोयुवाविद्वान् सुन्दर प्रियदर्शन। सर्वशास्त्रार्थवेत्ताच डित्थइत्यभिधी- यतइति कलापटीका ॥

डिम. । पु। नाटकस्य रूपकविशेषे ॥

डिम्ब । पु। भयध्वनौ ॥ अण्डे ॥ पु-

ष्णुसे ॥ शीघ्रगे ॥ विप्लवे । डमरे । अप्रथ कलहे ॥ एरण्डे ॥ भये ॥
डिम्बनम् । डिविनोदे । घञ् ॥
डिम्बाहव । पुं । भूभृतामून्ये युद्धे ॥
डिम्बिका । स्त्री । जलविम्बे ॥ शोणक वृक्षे ॥ कामुकस्त्रियाम् ॥
डिम्भ. । पि । बालिशे । वैधेये ॥ बाले । शिशौ ॥ डिम्भयति । डिभिसङ्घाते । चुरादि । पचाद्यच् ॥ डिंभ्यते वा घञ् ॥ अस्वरूपान्तरं डिम्भो पीतिद्विरूपकोश ॥
डिम्भक. । पु । डिम्भे ॥ स्वार्थेक. ॥
डिम्भचक्रम् । न । स्वरोदयोक्ते नराणां शुभाशुभनिर्णायके चक्र वि० ॥ यथा । डिम्भचक्रे न्यसेद्भानि भानु भादित्रिमस्तके । मुखे वौद्धि दयस्कन्धे चैकैक बाहुद्वसयो ॥ हृदिपञ्च नाभिगुह्ये चैकैकपट्पजानुनो । चरणाभ्यां तथैकैक जन्मर्क्षं पतनात् फलम् ॥ शीर्षस्थेछ्त्रलाभ स्यात् वक्त्रेमिष्टान्नभोजनम् । स्कन्धेधनी च बाहुभ्यां स्थानभ्रष्टो भ [illegible] ॥ पाणिभ्यांतस्करो बध्वोर्ह्वदयायुश्च नाभित । गुह्येकामोऽभ्रमोजान्वोरल्पजीवीचपादयोरितिस्वरोदय ॥
डिम्भा । स्त्री । स्तनपायाम् ॥ टाप् ॥
डीनम् । न । पक्षिगतिप्रभेदेपतनमाघे ॥ काव्यपर्वणिविशेषोऽस्याष्टव्य ॥

आगमशास्त्रविशेषे यथा । डामर डमर डीन श्रुत कालीविलासकम् । सप्तकोटि महाग्रन्था ममवक्त्राद्विनिर्गता ॥ इति मुण्डमालातन्त्रम् ॥
डयनम् । डीङ् विहायसागतौ । नपुंसके भावेक्त. । स्वादयओदित । ओदितश्चेति निष्ठातस्य न ॥
डीनडीनकम् । न । खगानागतिक्रिया विशेषे ॥ तेषांपतन निर्विशेषणाडुकुत्सितञ्च डीनडीनकपदवाच्यम् ॥
डीनावडीनम् । न । पक्षिणांगतिविशेषे ॥ तत्तु एकस्यागतौ गत्यन्तरमिश्रणम् ॥ अध कुत्सितंगमनञ्च ॥
डीयमान । त्रि । आकाश प्रच्युतच्छति ॥
डुण्डु । पु । डुण्डुभसर्पे ॥
डुण्डुभ. । पु । राजिलेसर्पे ॥ डुण्डु इत्यनुकरणशब्द । तम् भणति तेन भातीति वा । अन्येष्वपीतिड ॥ यद्वा । लक्ष्यते । ओलडिउत्क्षेपे । घञ् । डलयोरेकत्वम् । डभति । डभपूरणे । इगुपधेतिक । डण्डश्चासौडभश्च । पृषोदरादि ॥ द्विमुखो डुण्डुभ स्मृत ॥
डुण्डुल. । पु । क्षुद्रोलूके । पिङ्गले । इत्यडाविधि ॥

डुलिः । स्त्री । कमठ्याम् ॥ डोलयति । डुलउत्क्षेपे । इगुपधादितिकिः ॥

डुलिका । स्त्री । खञ्जनाकृतिपक्षि विशेषे ॥

डुली । स्त्री । चिल्लीशाके ॥

डोडिका । स्त्री । सुमुष्व्याम् । करे कश्रा इति प्रसिद्धे फलशाकविशेषे ॥ डोडिकापुष्टिदा वृष्या रुच्या वह्नि प्रदा लघु । हन्ति पित्तकफार्शांसि क्रिमिगुल्मविषामयान् ॥ * ॥ वाल डोडीफल मविकल स्विन्नमीषच्च तोये स्नेहे हिङ्गुप्रथयिनितती वे- सवारेण सिद्धम् । गव्य तक्रं क्थित निहिते साधित रामठेन खादन् खा दन निभृत ममृत निन्दितभोक्तृभि कै ॥ * ॥ सम्भृज्यशुष्कतरणे प्रता पात् प्रतप्त माज्ये नवडोडिशाक म् । सवैव्यर्व रामठदत्तवास खाद करो निन्दति व्यञ्जनानि ॥ डोडिका वातला रूक्षा शीता गुर्वी विषापहा । सुस्विन्ना रोचनी हृद्या अस्विन्ना कण्ठकर्त्तरी ॥

डोडी । स्त्री । डोडिकायाम् ॥ क्षुप विशेषे । जीवन्त्याम् । सुखालुका याम् ॥

डोम' । पु । स्वनामख्याते ऽस्पृश्यजा तौ ॥ यथा । चण्डालश्चैव डोमश्च स्नानकस्य तथा इति । इण्डीरश्चैव भण्डीरो भूषु णडश्च इत्याश्रमी ॥ इ यामुण्डी लिङ्गधारी समाप्तते यश स्विनि । स्पृष्ट्वा प्रमादत स्नात्वा गाय त्र्यष्टशत जपेदिति मत्स्यसूक्ततन्त्रे ३९ पटल ॥

डोरम् । न । } हस्तादिबन्धनसूत्रे ॥
डोरकम् । न । }

डोरडी । स्त्री । वृहत्याम् ॥ इतिराज निर्घण्ट ॥

---

ढ

---

ढ । पु । ढकारे ॥ ढक्कायाम् ॥ शुनि ॥ श्वलाङ्गूले ॥ निर्गुणे ॥ ध्वनौ ॥ ढ गणे ॥

ढक्का । स्त्री । यश पटहे ॥ ढगितिका यति । कैशब्दे । आतइतिक ॥

ढक्कारी । स्त्री । तारिणीदेव्याम् ॥

ढगण । पु । भेदत्रयविशिष्टे त्रिमात्रि के ॥ यथा । ( ।ऽ ध्वज १ ) ( ऽ। ता- ल, २ ) ( ।।। ताण्डवम् ३ ) इति ॥

ढालम् । न फलके ॥

ढाली । त्रि । चर्मिणि ॥

ढामरा । स्त्री । हस्याम् ॥

ढुण्ढि, । पु । श्रीगणेशविशेषे ॥ यथा । अन्वेषणे ढुण्ढिरयप्रथितो स्ति धातु

सर्वैर्बहुविह्वलतया भवद्धुविह्वनामा । काशीप्रवेशमपि कोऽभतेऽवद्धे शीतोषं क्षिमा तब विनाय च सुधिद्ध राज ॥ इति काशीखण्डगणेशप्रति भिवचाक्यम् ॥

ढोल । पु । स्वनाम ख्यातेवाद्यविशेषे ॥

---

### ण

—

ण । पु । णकारे ॥ बुद्धदेवताविशेषे । बिन्दुदेवे ॥ भूषणे ॥ गुणवर्जिते ॥ पानीयनिलये ॥ निर्णये ॥ ज्ञाने ॥

णयः । पु । प्लक्षवीकस्थे समुद्रोपमे स रोविशेषे ॥

* ॥ * ॥ इत्यादिगौडकुलोत्पन्नाडी चवाखप्रधानोपनामतुलारामनिश्रा त्मजश्रीधनपतिमिश्रापरनाम्ना त था श्रीसद्गुरुश्रावधूतश्रीपरमहंस परिव्राजकाचार्यश्रीमहरिहरानन्द नाथभारतिमिश्रश्येन श्राद्धावधूतश्री सुखानन्दनाथपरनामधेयेन विरचि ते शब्दार्थचिन्तामणौ टवर्गे.समा- सः ॥ १ ॥ * ॥ * ॥ * ॥ * ॥ * ॥



## तत् सत्

•••••••

### त

त । पु । तकारे ॥ चौरे ॥ अन्वले ॥ पुच्छे ॥ क्रोडे ॥ म्लेच्छे ॥ रत्ने ॥ सुग ते ॥ योधे ॥ गौरविवर्जितपुच्छे ॥ क्रोष्टुपुच्छे ॥ स्त्री । न । तरणे ॥ पु ण्ये ॥ तटति । तटउच्छ्राये । ड. ॥

तकिल । त्रि । धूर्ते ॥

तकिला । स्त्री । औषधे ॥

तक्रम् । न । चतुर्थांशजलसयुक्ते दधि नि । गोरसजे । दण्डाहते । काल सेये ॥ तत्पञ्चविधम् । यथा । ससरं निर्जलं घोलं मथितन्त्वसरोदकम् । तक्रं पादजल प्रोक्तं मुदश्विच्चार्द्ध- वारिकम् ॥ छच्छिकासरहीनाच्छा- दच्छा प्रचुरवारिका ॥ * ॥ तुर्यांशेन जलेन सयुत मतिस्थूलं सदस्वं दधिम्रा ये माहिष मंथुकेन विमले मृद्भाज ने गालयेत् । भृष्टहिङ्गुवजीरकञ्च लवणं राजीचकिञ्चिन्मितां पिष्टात परिमिश्रयेद्भवतितत् तक्रनकस्य- प्रियम् ॥ अस्यगुणायथा । तक्रवचिक रं वह्निदीपनं पाचनं परम् । उदरेये गदास्तेषां नाशनं तृप्तिकारकम् ॥ अपिच । तक्रंग्राहि कषायाम्ल स्वादु

पाकरसं लघु । वीर्य्योष्णं दीपनं द
र्प्यं प्रीणनं वातनाशनम् ॥ ग्रहण्या
दिमतां पथ्यं भवेत् सङ्ग्राहिलाघवा
त् ॥ * ॥ किञ्च स्वादुविपाकित्वान्न
च पित्तप्रकोपनम् । कषायोष्णविका
शित्वाद्रौक्ष्याच्चापि कफापहम् ॥ न
तक्रसेवी व्यथते कदाचि न्न तक्रदग्धाः
प्रभवन्ति रोगाः । यथा सुराणाममृ
तं सुखाय तथा नराणां भुवि तक्रमा
हुः ॥ समुद्धृतघृतं तक्रं पथ्यं लघु विशे
षतः । स्तोकोद्धृतघृतं तस्माद्गुरु वृ
ष्यं कफापहम् ॥ अनुद्धृतघृतं सा
न्द्रं गुरुपुष्टिकफप्रदम् ॥ * ॥ वाते
ऽम्लं शस्यते तक्रं शुण्ठीसैन्धवसंयुतम्
। पित्ते स्वादुसितायुक्तं सव्योषं म
जितं कफे ॥ * ॥ हिङ्गुजीरयुतं घोलं सै
न्धवेन सुसंयुतम् । भवेदतीव वातघ्न
मर्शोतीसारहृत् परम् ॥ रुच्यं पुष्टि
दं बल्यं वस्तिशूलविनाशनम् । मूत्र
कृच्छ्रे तु सगुडं पाण्डुरोगे सचित्र
कम् ॥ शीतकालेऽग्निमान्द्ये च तथा
वातामयेषु च । अरुचौ स्रोतसां रो
धे तक्रं स्यादमृतोपमम् ॥ तत्तु ह
न्ति गरच्छर्द्दिप्रसेकविषमज्वरान् ।
पाण्डुमेदोग्रहण्यर्शोमूत्रग्रहभगन्द
रान् ॥ मेहं गुल्ममतीसारं शूल
प्लीहोदरारुचीः । श्वित्रकोठघृतव्या
धीन् कुष्ठशोथतृषाकृमीन् ॥ नैव त
क्रं क्षते दद्यान्नोष्णकाले न दुर्बले
। न मूर्च्छाभ्रमदाहेषु न रोगे रक्त
पैत्तिके ॥ * ॥ यान्युक्तानि दधीन्य
ष्टौ तद्गुणं तक्रमादिशेत् ॥ अथामय
हतक्रगुणाः । तक्रमामं कफं कोष्ठे ह
न्ति कण्ठे करोति च । पीनसश्वासका
सादौ पक्वमेव प्रयुज्यते ॥ तञ्चति
तञ्च्यते वा । तञ्चु गतौ । स्फायितञ्ची
तिरक् । न्यङ्क्वादिः ॥

तक्रकूर्च्चिका । स्त्री । छाना इति गौड
भाषाप्रसिद्धे दुग्धविकृतौ ॥ उष्ण
दुग्धे तक्रयोगात् जाता स्यात् तक्र
कूर्च्चिका ॥ तक्रेण सह पक्वे क्षीरे ॥
तक्रेणपक्वं यत्क्षीरं शामयेत् तक्र
कूर्च्चिकेति ॥

तक्रपिण्डः । पुं । क्षीरविकृतौ ॥ दध्ना
तक्रेण वा नष्टं दुग्धं बद्धं सुवाससा ।
द्रवभागेन हीनं यत् तक्रपिण्डः स
उच्यते ॥

तक्रमांसम् । न । मांसप्रकारविशेषे ॥
यथा । पाकपात्रे घृतं दत्त्वा हरिद्रां
हिङ्गु भर्ज्जयेत् । छागादेः सनलका
ऽस्थिखण्डांश्च भर्ज्जयेत् ॥ सिद्धि
योग्यं जलं दत्त्वा पचेन्मृदुतरं व
ह्निना । राजिकादिद्रुते तक्रे मांसखण्डा
न्निधारयेत् ॥ तक्रमांसन्तु वातघ्नं च

कुष्ठघ्नं चक्षुष्यम् । कषायं पित्तलं किञ्चित् सर्वोन्मादस्य पाचनम् ॥

तक्षवाक्षनः । पु । नारद्ये ॥

तक्षादः । पु । मद्यानद्रुच्छे ॥ तक्षे च इति । अष० । अण् ॥

तक्षः । पुं । भरतात्मजे । तक्षशिलाधीशे ॥ न । चिक्कानक्षणे ॥

तक्षकः । पु । पातालस्थाष्टनागान्तर्गत नागराजविशेषे । कश्यपात्कद्रुगर्भे जाते इन्द्रसखे ॥ वर्द्धकी । तक्षिण ॥ वृक्षविशेषे ॥ विश्वकर्मणि ॥ तक्षति । तक्षूतनूकरणे । ण्वुल् ॥

तक्षणम् । न । कृशकरणे । तक्ष० ।-ल्युट् ॥

तक्षणी । स्त्री । वाश्याम् । वढ़ूखा इति भाषा ॥ गौरादि ॥

तक्षा । पु । त्वष्टरि । वर्द्धकौ ॥ काष्ठं तक्षोति तक्षति वा । तक्ष० । कनिन् वृद्धषि तक्षीति कनिन् ॥

तक्षशिला । स्त्री । देशविशेषे ॥ नगरी विशेषे । सिन्धुदेशे भरतात्मजस्य तक्षस्य राजधान्याम् ॥

तगण । पुं । अन्त(ऽऽ।)गणे ॥ तगंष कोगण ॥

तगर । पुं । चाकनी इति देशभाषा प्रसिद्धे पुष्पवृक्षविशेषे । सितपुष्पे । कटुच्छदे । कालपर्णे । टगर इति-



गौड़भाषा ॥ मदनवृक्षे ॥ न । न न्द्यावर्त्तवृक्षे । पिण्डतगर इतिकोङ्कणभाषा । तगरमूल इतिगौडभाषा ॥ तन्मूले तत्पुष्पेच ॥ तगरद्वय मुष्णंशात् स्वादु स्निग्धलघुस्मृतम् । विषा ऽपस्मारमूर्द्धाक्षिरोगदोषत्र-यापहम् ॥ काष्ठस्थद्रुमे ॥

तगरपादिकम् । न । तगरे । नन्द्यावर्त्ते ॥

तगरपादी । स्त्री । अंत । तगरे ॥

तङ्क. । पु । दुःखेन जीवने ॥

तङ्कनम् । न । दुःखेनजीवने ॥ तङ्कि० । ल्युट् ॥

तङ्क' । पु । जनपदविशेषे ॥

तङ्कण । पु । नीवृद्विशेषे ॥

तच्छील' । त्रि । तत्स्वभावे ॥ य,स्व भावत, फलनिरपेक्ष तत्प्रवर्त्तते स तच्छील ॥

तज्ज । त्रि । सांहिदिकार्थे ॥ तज्जाते ॥

तज्ज्ञ. । त्रि । तद्भिज्ञे ॥ तत् जानाति । इगुपधेतिक ॥

तञ्ची । स्त्री । शिञ्जुपत्याम् ॥

तट' । त्रि । शरीरे । कूले । रोधसि तटति । तटउच्छ्राये । अच् ॥ न । क्षेत्रे ॥

तटस्थः । त्रि । तीरस्थे ॥ तटे तिष्ठति । ष्ठा० । क' ॥ न । तद्भिन्नत्वेसति त

सोधकत्वमितिलक्षणयाचपिते स्वरूपेतरलक्षणे ॥ स्वरूपा ऽनन्वयित्वे सति विशेषणान्तरं सहूच्येतरत्वावर्ण्यकरूपे लक्षणे ॥

तटाक. । पु । तडागे । पद्माकरे ॥ तटमकति । अककुटिलायांगतौ । कर्मण्यण् ॥

तटाग । पु । तडागे ॥ तटमगति । अगकुटिलायांगतौ । कर्मण्यण् ॥

तटिनी । स्त्री । नद्याम् ॥ तटमस्त्यस्याः । अतइनिठनावितीनि । पुष्करादिभ्योदेशेइति इनिर्वा । ऋन्नेभ्यइति ङीप् ॥

तटी । स्त्री । तीरे । कूले ॥ तटति । तट॰ । अच् । जातित्वात् ङीष् ॥

तडाक । पु । तडागे ॥ तड्यते । तड आघाते । पिनाकादयश्चेतिसाधु ॥

तडाग । पु । जलाधारविशेषे । पद्माकरे ॥ प्रशस्तभूमिभागस्थो बहुसत्वसरोषित । जलाशय स्तडाग. स्यादित्याहु शास्त्रकोविदा. ॥ * ॥ पञ्चशतधनु परिमिते जलाशये ॥ यथा । चतुर्विंशाङ्गुलोहस्तो धनु स्तच्चतुरुत्तर । शतधन्वन्तरश्चैव तावत् पुष्करिणीशुभा । एतत् पञ्चगुण प्रोक्तस्तडागइतिनिर्णय: ॥ इतिमकवर्द्धमानधृतोवशिष्ठ' ॥ यन्त्रकूटके ॥

तड्यते । तड॰ आघाते । तडगादयश्चेति निपातित ॥

तडाघात' । पु । आर्द्रीकृत्यहस्तिशुण्डाघाते ॥ यथा । उच्चै करिकराक्षेपे तडाघात विदुर्बुधा इति ॥

तडित् । स्त्री । विद्युति ॥ ताडयत्यभ्रम् । तड॰ । ताडेर्णिलुक्चेतीति प्रत्यय ॥ कान्तिके ॥

तडित्वान् । पु । वारिदे । मेघे ॥ तडित'सन्त्यस्मिन् । मतुप् ॥ मुस्तके ॥

तण्डक । पु । न । खञ्जने ॥ फेने ॥ समासमायशाखि । समस्तपदजातके ॥ गृहदारुणि ॥ तरुस्कन्धे ॥ त्रि । मायाबहुले ॥ तण्डते । तडिआडने । ण्वुल् ॥ उपघातके ॥

तण्डु' । पु । शिवद्वारपालविशेषे ॥

तण्डुरीण । पु । कीटभावे ॥ न । तण्डुलोदके ॥ त्रि । बर्बरे ॥ इतिहेमचन्द्र ॥

तण्डुल । पु । धान्यादिनिकरे । धान्यादिसारे । भाडरइतिचाँवल इतिचभाषा ॥ तण्डुलोमेहजन्तुघ्न सनवस्त्वतिदुर्ज्जर: ॥ ताड्यते । तड आघाते । सानसिवर्णसिपर्णसितण्डुलाङ्कुशेत्यादिना निपातनादुलच् प्रत्ययो नुमागमश्च ॥ यद्वा । त्रियन्तेनुच्छन्ते तन्यन्ते ताड्यंते वा इति तण्डुला: ।

कृन्तुटितनितान्तिम्यश्चलच् तण्ड
लादेश ॥ विडङ्गे ॥ अल्पमारिषे ॥

तण्डुलपरीक्षा । स्त्री । नवविधदिव्या
न्तर्गतदिव्यविशेषे ॥

तण्डुला । स्त्री । महासमङ्गायाम् ॥
विडङ्गे ॥

तण्डुलाम्बु । न । ज्येष्ठाम्बुनि । तण्डुलो
दके ॥

तण्डुलिकाश्रम । पु । तीर्थविशेषे ॥

तण्डुली । स्त्री । यवतिक्ताख्यलतायाम्
॥ शशाण्डुल्याम् ॥ तण्डुलीयशाके ॥

तण्डुलीक । पु । अल्पमारिषे ॥

तण्डुलीयः । पु । मेघनादे । अल्पमा
रिषे । बहुवीर्ये । सुशाके । चौंला
इ इतिभाषा ॥ तण्डुलीयो लघु,
शीतो रूक्ष, पित्तकफास्रजित् । स्व
ष्टमूत्रमलो रुच्यो दीपनो विषहार
क, ॥ तण्डुलायहित । विभाषाह
विरपूपादिभ्य इति छः ॥ विडङ्गत
रौ ॥ ताप्ये ॥

तण्डुलीयकः । पु । तण्डुलीयशाके ॥
विडङ्गे ॥ स्वार्थेकन् ॥

तण्डुलीविका । स्त्री ।
तण्डुलुः । पु ।
} विडङ्गे ॥

तण्डुलेय' । पु ।
तण्डुलेर । पु ।
} तण्डुलीयशाके ॥

तण्डुलोत्थम् । न । तण्डुलाम्बुनि ॥

तण्डुलोदकम् । न । तण्डुलाम्बुनि ॥
यथा । जलमष्टगुणं दत्त्वा पलं क-
ण्डिततण्डुलात् । भावयित्वा ततो
देय तण्डुलोदककर्मणीति वैद्यकप
रिभाषा ॥

तण्डुलौघ. । पु । वेणुवंशे ॥ तण्डुलस
मूहे ॥

तण्डुल्य. । पु । तण्डुलीयशाके ॥ तण्डु
लायहितः । विभाषाहविरपूपादि-
भ्य इतिपक्षेयत् ॥

तण्डुलौघ. । पु । कीटमात्रे ॥ न । तण्डु
लोदके ॥ त्रि । बर्बरे ॥ इतिमेदि-
निकर ॥

तत् । अ । हेतौ ॥ तनोति । तनुवि-
स्तारे । क्विप् । गमादीनांकाविष्य
नुनासिकलोपे तुक् ॥

ततम् । न । वीणादिवाद्ये ॥ पु । वा-
यौ ॥ त्रि । व्याप्ते ॥ विस्तृते । पृथौ ॥
तन्यते । तनु॰ । तनिमृङ्भ्यांकिञ्चे
ति तनोतेस्तन् ॥ तन्यतेस्म वा । त
नु॰ । क्त । अनुदात्तोपदेशेति न
लोपः ॥

ततपत्री । स्त्री । कदलीवृक्षे ॥

ततम' । त्रि । बहुषुमध्येएकस्मिन् ॥

ततरः । त्रि । द्वयोर्मध्ये एकस्मिन् ॥

ततवत् । त्रि । विस्तारयुक्ते ॥

ततः । अ । आदौ ॥ षट्प्रश्ने ॥ आन

त्वर्थे ॥ कथान्तरे ॥ हेतौ ॥ पञ्चम्य
र्थे ॥ तस्मात् । पञ्चम्यास्तसिल् ।
त्यदाद्यत्वम् ॥

ततस्त्य. । त्रि । ततोभवे ॥ ततसम्बन्धि
नि ॥ अव्ययात् त्यप् ॥

तति । स्त्री । श्रेण्याम् ॥

तत्काल । पु । तदात्वे । वर्त्तमानका
ले ॥ तथावो कालस्य ॥

तत्कालधी: । त्रि । प्रत्युत्पन्नमतौ । उ
पस्थितबुद्धौ ॥ तत्कालेधीर्यस्य ॥

तत्क्रिय । त्रि । कर्मकारे । वेतन वि
नाकर्मकारके ॥

तत्त्वथा । पु । सत्यार्थे ॥ सत्यावो य
थाश्च । सत्यवत्वा वा ॥

तत्त्वम् । न । याथार्थ्ये । स्वरूपे । अना
रोपितस्वरूपे ॥ परमात्मनि । ब्रह्म-
णि ॥ ब्रह्मभावे ॥ तदितिसर्वनाम स
र्वञ्च ब्रह्म तस्यनाम तदिति । तद्भा
व स्तत्त्व ब्रह्मणो याथात्म्य तत्त्वमिति
पूज्यपादानां व्याख्यानम् ॥ आदि
मध्यावसानेषु दु ख सर्वमिद यतः ।
तस्मात् सर्वं परित्यज्य तत्त्वनिष्ठो
भवानघेत्युपदेश' ॥ अथाहुर्गौडपा
दाचार्या । तत्त्वमाध्यात्मिक दृष्ट्वा
तत्त्व दृष्ट्वा तुबाह्यत. । तत्त्वीभूत
स्तदारामस्तत्त्वाद प्रच्युतोभवेदिति
॥ तत्त्व चागमसिद्ध मित्याहुर्वेद
वादिन ॥ विलम्बितनृत्ये ॥ ततनं
तत् । तनु० । क्विप् । अन्येषामपीतिवः
। न्वत्यरत्युपलक्षणंगीतवाद्ययो ॥
वाद्यप्रभेदे ॥ चेतसि ॥ वस्तुनि ॥ अ
द्वयज्ञाने ॥ पारमार्थिके । धर्मिस्वरू
पे ॥ मूलप्रकृत्यादिचतुर्विंशतिषु ॥
मूलप्रकृतिरविकृति र्महदाद्या:प्रकृ
तिविकृतय: सप्त । षोडशकस्तुविका
रो न प्रकृति र्न विकृति पुरुष: ॥ त
स्यभाव' । त्व. ॥*॥ वेदान्ता बहुतर्क
कर्कशमतिग्रस्ता परं मायया भाट्टा
कर्मकलाकुला हतधियो द्वैतेऽपि वै-
शेषिका. । अन्ये भेदरता विवादव
शगा स्ते तत्त्वतो वञ्चिता स्तस्मात्
सिद्धमत स्वभाववशगं धीर. परंसंश्र
येत् ॥ सत्त्वरजस्तमस्सु ॥ तत्त्वन्तु ना
नामुनिभिर्नानाविधमुक्तम् । विस्तर
भिया तन्न सङ्गृहीतम् ॥*॥ सर्वस्मिन्
दृश्येबाध्यमानेऽपि तद्बाधाधिष्ठानत्वे
न स्वयमबाध्यमान मनारोपितं स्व
रूप तत्वमितिविवरणकारा' । अथप
र्याया अमृत सत्यं परमार्थं सतत्व
मित्येते एकार्थवाचिन परमार्थ
तो ब्रह्मणोवाचका शब्दाइतिभाष्य
काराः ॥

तत्त्वज्ञानम् । न । ब्रह्मज्ञाने ॥ बुद्धेर्गु
णविशेषे ॥ यथा । प्रमाणप्रमेयसंशय

प्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः। इति गौतमः॥ अनारोपितवस्तुप्रत्यये॥ इदं सर्वं द्वैतजातमद्वितीये चिदानन्दात्मनि मायाकल्पितत्वान्मृषैव आत्मैवैकः परमार्थसत्यः सच्चिदानन्दोऽद्वयोऽहमस्मीति परिज्ञाने॥ तत्त्वस्य ज्ञानम्॥

तत्त्वज्ञानार्थदर्शनम्। न। तत्त्वज्ञानार्थस्यालोचने॥ तत्त्वज्ञानस्य ब्रह्मास्मीति साक्षात्कारस्य वेदान्तवाक्यकरणकस्यामानित्वादिसर्वसाधनपरिपाकफलस्य अर्थः प्रयोजनमविद्यातत्कार्यात्मकनिखिलदुःखनिवृत्तिरूप परमानन्दावाप्तिरूपश्च मोक्षः तस्य दर्शनम् आलोचनम्। तत्त्वज्ञानफलालोचने हि तत्साधने प्रवृत्तिः स्यात्॥

तत्त्वतः। अ। यथावदर्थे॥

तत्त्वदर्शी। त्रि। वस्तुयाथात्म्यदर्शनशीले ब्रह्मविदि कृतसाक्षात्कारे॥ तत्त्वं वस्तुनो याथात्म्यम् तद्द्रष्टुं शीलं यस्य। णिनिः॥

तत्त्वभावः। पु। नेतिनेतीत्यादिश्रुतिनिर्दिष्टे विदिताविदिताभ्यामन्यस्मिन्नद्वयस्वभावे॥

तत्त्वविचारः। पुं। भूतार्थचिन्तायाम्॥

तत्त्ववित्-द्। त्रि। स्वरूपविदि। याथात्म्यविदि। ब्रह्मविदि॥ शैवे॥ शैवा हि आत्मविद्याशिवा इति सङ्क्षेपतस्त्रीणि तत्त्वानि सर्वजगत्प्रवर्त्तकानीति मन्यते॥ तत्त्वस्वरूपसकलसंसारधर्मविलक्षणसच्चित्सुखरूपब्रह्माहमस्मीति वेत्ति जानातीति तत्त्ववित्॥

तत्पत्री। स्त्री। हिङ्गुतरुपत्र्याम्॥

तत्पदलक्ष्यार्थः। त्रि। अज्ञानादिसमष्ट्युपाध्युपहिताधारभूतेऽनुपहितचैतन्ये। चिदेकरसरूपिणि॥

तत्पदवाच्य। त्रि। तत्पदाभिधे॥

तत्पदवाच्यार्थ। त्रि। अज्ञानादिसमष्टि, एतदुपहितसर्वज्ञत्वादिविशिष्टचैतन्यम् एतदनुपहितचैतन्यञ्चैतत्त्रयं तप्तायःपिण्डवदेकत्वेनावभासमानं तत्पदवाच्यार्थो भवतीत्युक्त्यादितेऽर्थे॥

तत्पदाभिध। त्रि। तत्पदवाच्ये॥ मायोपाधिर्जगद्योनिः सर्वज्ञत्वादिलक्षणः। पारोक्ष्यशबलः सत्याद्यात्मकस्तत्पदाभिधः इत्याहुः॥

तत्पदार्थ। पु। जगत्कारणे परमात्मनि॥ यज्जगत्कारणं तच्च तत्पदार्थः स उच्यते॥ तदिति पदस्यार्थः॥

तत्परः। त्रि। तद्गते॥ आसक्ते॥ तत्

परमुत्तमं यस्य। तेनपूर्यते वा । पृ
पालनपूरणयो. । ऋदोरप् ॥
तत्परायणः । त्रि । तदासक्ते ॥
तत्पुरुषः । पु । प्रायउत्तरपदार्थप्रधाने
समासविशेषे ॥ सच षेधा।व्यधिकर
णपद. समानाधिकरणपदः सङ्ख्या
पूर्वपदश्चेति ॥
तत्फल । पु । कुवलये ॥ कुष्ठाख्यौष
धौ ॥ चोरनामसुगन्धिद्रव्ये ॥
तत्र । अ । तस्मिन् । सप्तम्यर्थे ॥ सप्त
म्यास्त्रल् ॥ तस्यामवस्थायाम् ॥
तत्रत्य । त्रि । तत्रभवे ॥ अव्ययात्-
त्यप् ॥
तत्रभवान् । त्रि । श्लाघ्ये । पूज्ये ॥ इत
राभ्योपिदृश्यन्त इतिप्राग्दीव्यतीय.
प्रथमार्थेत्रल् । सुप्सुपेतिसमास. ॥
तथा । अ । साम्ये ॥ अभ्युपगमे ॥ पृष्ट
प्रतिवाक्ये॥ समुच्चये ॥ निश्चये ॥
तेन प्रकारेण । प्रकारवचनेथाल् ।
विभक्तित्वात् त्यदाद्यत्वम् ॥
तथागत । पु । बुद्धमुनैा । सुगते ॥ त
था सत्यगत ज्ञानं यस्य यथापुनरावृ
त्तिर्नभवति तथा तेनप्रकारेण गत
इति तथागतः । सुप्सुपेतिसमासः ।
तथाच सुगतिसाधकताशोक्ता भव-
ति । तदुक्तंवोद्धागमे । यथागता
स्ते सनय. शिवांगतिं तथागत:श्चे।
पि ततस्तथागतइति ॥ त्रि । प्रक्रान्त
गतिशालिनि ॥ तथाभूते ॥
तथाच । अ । पूर्वोक्तार्थदृढीकरणे ॥
तथाहि । अ । निदर्शने ॥ प्रसिद्धमेवे
त्यर्थे ॥ तथाच हिच ॥
तथैव । अ । तद्वदेवेत्यर्थे ॥
तथ्यम् । न । सत्ये । ऋते ॥ त्रि । त
द्वति ॥ तथासाधु । तत्रसाधुरिति-
यत् ॥
तद् । त्रि । पूर्वोक्ते । बुद्धिस्थस्य परामर्शे
। सो० इतिभाषा ॥ तद्देशकालाव
स्थादैा दृष्ट स इति कथ्यते ॥ विप्र
कृष्टविषये ॥ स्त्री । सा ॥ न । तत्
तद् । सत्यज्ञानादिलक्षणलक्षितस्य
तत्त्वमस्यादिश्रुतिप्रसिद्धस्य ब्रह्मणो
नाम्नि ॥ यथा । तदित्यनभिसन्धा
य फलं यज्ञतप क्रियाः । दानक्रिया
श्चविविधा. क्रियन्तेमोक्षकाङ्क्षिभि
रिति॥ तदिति ब्रह्माभिधानमुच्चार्य
अनभिसन्धायचकर्मणः फलमित्यर्थ.
॥ तनोति । तनु० । त्यजितनियजि
भ्यो डिदित्यद्रिः ॥
तदनन्यत्वम् । न । तदभिन्नत्वे ॥ त-
स्मात अनन्यत्वं नाम पृथक्सत्तारा
हित्यम् ॥
तदन्यबाधितार्थप्रसङ्ग । पु दोषवि
शेषे ॥ यथा । धूमो यदि वह्निव्यभि

तद्गुणः

चारी स्वातन्त्र्याभ्यो न स्यादि-
त्यादि' ॥

तदर्पणम् । न । वस्तुनःप्रत्यर्पणे । प्रति
दाने । स्वामिने निक्षेपार्पणं ॥ त-
स्य अर्पणम् ॥

तदा । अ । तस्मिन् काले ॥ तदेदाच
॥ सर्वैकान्येति वा दा ॥

तदात्मा । पु । तत्स्वरूपे ॥ तस्यात्मा ॥

तदात्वम् । न । वर्त्तमानकाले ॥ त
देत्यस्यभाव । तस्यभावस्तत्तौ ॥

तदादि । त्रि । तदाप्रभृतौ ॥ सकाल
आदिर्यस्य यस्मिन्वा ॥

तदानीम् । अ । तस्मिन्काले । तदार्थे
॥ तदेदाच । दानीच ॥

तदामुखम् । न । आरम्भे ॥

तदेव । त्रि । सदैकात्म्य प्रत्यभिज्ञेये
त्यर्थे ॥

तत्रत । वि । तत्परे ॥

तद्गतमानस । त्रि । एकाग्रचित्ततये
इ्गतान्तःकरणे ॥

तद्गुणः । पु । काव्यालङ्कारभेदे ॥
स्वमुत्सृज्य गुणं योगाद्त्युज्ज्वल
गुणस्य यत् । वस्तु तद्गुणतामेति भ
ण्यतेसतु तद्गुणः ॥ वस्तुतिरस्कृत
निजरूपकेनापिसमीपगतेनप्रगुणत
या स्वगुणसम्पदा परत्ते समतिभा
सनेव यत् समासादयति स तद्गुणः

तद्बुद्धिः

। तस्यास्प्रकृतस्य गुणोऽस्यास्तीति ।
उदाहरणम् । विभिन्नवर्णा गरुडा
ग्रजेन सूर्यस्य रथ्या, परितः स्फुर
न्त्या । रत्नैः पुनर्यत्रस्चा स्वं स्वा
माननियिरे वंशकरीरनीलैः ॥ अत्र
रविलुरगापेच्चया गरुडाग्रजस्य तद्रूपे
च्चयाच हरिन्मणीनां प्रगणवर्णता ॥

तद्ग्रहः । त्रि । तदभिनिवेशे ॥ तस्मिन्
ग्रहस्तद्ग्रह' ॥

तद्दिनम् । अ । दिनमध्ये ॥ प्रतिदिने
इतिहेमचन्द्र' ॥ न । पूर्वोक्तदिने ॥

तद्दुल' । वि । कृपणे ॥ इतिहेम,

तद्धर्मा । पु । विनापिशीलेन स्वधर्मो
यमिति य' प्रवर्त्तते सतद्धर्मा ॥

तद्धित. । पु । वृत्तिविशेषे । तद्धिताः
स्वधिकारविहितप्रत्ययेषु ॥ तेचद्वि
विधा' । प्रकृत्यर्थभिन्नार्था' स्वार्थिका
श्च ॥ तेभ्य प्रयोगेभ्योहितः ॥

तद्वत् । वि । पूर्वोक्तवति ॥ तयचास्ति
। मतुप् ॥ तत्सदृशे ॥ तेनतुल्ये ॥
तुल्यार्थे वति. ॥

तद्वला । स्त्री । वाणविशेषे ॥ इतिहेम
चन्द्र' ॥

तद्बुद्धि' । स्त्री । परमात्मसाक्षात्कार
परायांबुद्धौ ॥ त्रि । सर्वदा निर्वीज
समाधिभाजिकृतसाक्षात्कारे ॥ त
स्मिन् ज्ञानप्रकाशिते परमात्मतत्त्वे

सच्चिदानन्दघने एव वाह्यसर्वविष यपरित्यागेन साधनपरिपाकात् पर्यवसिता वुद्धिरन्तःकरणवृत्ति सा चाकारस्वरूपायस्य स तथा ॥

तनय । त्रि । पुत्रे ॥ तनोति कुलम् तन्यते वा । तनु० । वत्रिमत्रितनि भ्य कयन् ॥

तनया । स्त्री । दुहितरि । पुत्र्याम् ॥ टाप् ॥ चक्रकुल्यायां लतायाम् ॥ घृतकुमार्याम् ॥

तनिका । स्त्री । तनी इति भाषाप्रसिद्धे वन्धनरज्जौ ॥ यथा । वितानतनिका ॥

तनिमा । पु । तनुत्वे । तानवे ॥ तनोर्भाव । पृथ्वादित्वात् इमनिच् ॥

तनिष्ठ । त्रि । क्षुद्रे ॥ अयमेषां मतिशयेनतनु । अतिशायने इष्ठन् ॥

तनीयान् । त्रि । अल्पे ॥ अयमनयोरतिशयेन तनु । द्विवचनविभज्येती यसुन् ॥

तनु । स्त्री । काये । शरीरे ॥ त्वचि ॥ स्त्रियाम् ॥ तन्व्याम् ॥ वोतोगुणवचनादिति पक्षिकोऽङीषभाव. ॥ त्रि । अल्पे ॥ विरले ॥ कृशे ॥ तनोति तन्यतेवा । तनु० । भृमृशीत्यु ॥ खले ॥

तनुकम् । न । त्वचे ॥ तनुत्वच इति यावादिषु पाठात् कन ॥

तनुक्षीर । पु । आम्रातके ॥

तनुच्छद । पु । वर्मणि ॥ तनुश्छाद्यते ऽनेन । छद० । पुंसिसंज्ञायामिति घ ॥

तनुच्छाय । पु । जालवर्वुरकवृक्षे ॥ ॥ स्त्री । न । शरीरच्छायायाम् ॥ तनोश्छाया । विभाषासेनेति वा क्लीवत्वम् ॥

तनुज । पु । पुत्रे ॥ तनोर्जात । ड ॥

तनुजा । स्त्री । पुत्र्याम् ॥ टाप् ॥

तनुत्रम् । न । वर्मणि । सन्नाहे ॥ तनुस्त्रायते । त्रैङ्० । आतोनुपेतिक ॥

तनुत्राणम् । न । कवचे । तनुत्रे ॥ शरीररक्षणे ॥

तनुत्वचा । स्त्री । क्षुद्राग्निमन्थे ॥

तनुपत्र । पु । इङ्गुदीवृक्षे ॥

तनुभस्त्रा । स्त्री । नासिकायाम् ॥ तनोर्भस्त्रेव ॥ तन्व्यांचर्मप्रसेविकायाम् । छोटी भाथी इति छोटीमसक इतिच भाषा ॥

तनुभृत् । पु । जीवे ॥

तनुमध्या । स्त्री । गायत्रीछन्द प्रभेदे ॥ त्यौचेत्तनुमध्या । य० । मूर्त्तिर्मुरशत्रोरत्यद्भुतरूपा । आस्तां ममचित्ते नित्यं तनुमध्या ॥

तनुरस । पु । घर्मे । स्वेदजले ॥ अल्प

रसे ॥ त्रि । तद्विशिष्टे ॥

तनुरट् । न । रोमणि ॥

तनुरुहम् । न । तनुरुहे ॥ त्रि । तनौ रूढे ॥

तनुवात । पु । नरकविशेषे ॥

तनुवारम् । न । वर्मणि । सन्नाहे ॥ तनुवृणोति आवृणोति आच्छादयति । वृञ्० । कर्मण्यण् ॥

तनुवीजः । पु । राजवदरे ॥

तनुव्रण । पुं । वल्मीकरोगे ॥

तनु: । न । शरीरे ॥ तनोति तन्यते वा । तनु० । अर्त्तिपृवपियजितनिधनितपिभ्योनिदित्युसिप्रत्यय । तनुषी तनूंषि ॥

तनुसञ्चारिणी । स्त्री । बालिकायाम् ॥

तनुसर । स्वेदे ॥ तनो सरति । सृ० । अच् ॥

तनू: । स्त्री । काये । शरीरे ॥ तनोति तन्यते वा । तनु० । भृमृशीत्यु । प्राणिजातेरित्यूङ् ॥ कृषिचमितनिधनीत्यूर्वा ॥

तनूकृत । त्रि । तष्टे । सूक्ष्मीकृते ॥ अतनुस्तनुरकारि । कृञ क्त ॥

तनूज. । पु । पुत्रे ॥ त्रि । शरीरजे ॥ तन्वाःजात. । पञ्चम्यामितिड ।

तनूजनि' । पु । पुत्रे ॥ तन्वा'जनिर्यस्य ॥

तनूजा । स्त्री । पुत्रिकायाम् ॥ टाप् ॥

तनूनपम् । न । आज्ये । घृते ॥ तन्वा जनकृशं पाति । पा० । क. ॥

तनूनपात् । पु । अग्नौ । पावके ॥ तनूं शरीरं न पालयति । नभ्राण्नपादिति निपातित । तनूनपातौ । तनूनपात ॥ तनूस्वस्वरूप न पाति नरक्षति । आशुविनाशित्वात् इति तनूनपाच्छब्दन्त । उगिदचामिति नुमि तनूनपान् तनूनपान्तौ तनूनपान्त इतिवा ॥ तन्वा जन कृश पाति । तनूनप घृतादि तत् अत्ति । अदो ऽन न्न इतिविट् । तनूनपात् तनूनपादौ तनूनपाद्इतिवा ॥ चित्रकेे ॥

तनूरुहम् । न । रोम्णि ॥ पक्षिपक्षे । पतत्रे ॥ पुत्रे ॥ तन्वा रोहति । रु-ह० । इगुपधेतिक. । मू०कोषा ॥

तनूह्रद. । पु । पायौ । गुदे ॥

तन्ति. । स्त्री । प्रसारितरज्ज्वाम् ॥ दाम्न्याम् ॥

तन्तु । पु । सूत्रे ॥ ग्राहे ॥ अपत्ये ॥ सन्ततौ ॥ तनोति तन्यते वा । तनु० । सितनीतितुन् ॥

तन्तुकाष्ठम् । न । तूल्याम् । ताँतका काठ इति भाषा ॥

तन्तुकी । स्त्री । नाड्याम् ॥

तन्तुकीट । पु । कोषकारे । गुटिपोका इतिगौड भाषा । रेशमकाकीडा

इति भाषा ॥

तन्तुण । पुं । ग्राहे । ह्वाँगर इतिगौ ड़भाषा ॥

तन्तुनाग । पु । ग्राहे ॥

तन्तुनाभ । पु । लूतायाम् ॥

तन्तुनिर्य्यास । पु । तालवृक्षे ॥

तन्तुपर्व । न । परमेश्वरोपवीतदानति थौ । श्रावण्या पूर्णिमायाम् ॥

तन्तुभ । पु । सर्षपे ॥ तन्तुना भाति । भा० । सुपीतिक ॥ वत्से ॥

तन्तुरम् । न । } मृणाले ॥
तन्तुलम् । न । }

तन्तुकी । स्त्री । सितापाके । चासनी इतिभाषा ॥

तन्तुवाप । पु । तन्त्रवाये । कुविन्दे ॥ तन्तून् वपति । टुवपृ० । कर्मण्यण्॥

तन्तुवाय । पु । लूतायाम् ॥ तन्तून् व यति । वेञ्० । ह्वावामश्चेत्यण् ॥ त न्त्रवाये । कुविन्दे । कोली इतितांती इतिचभाषा ॥

तन्तुविग्रहा । स्त्री । कदल्याम् ॥

तन्तुशाला । स्त्री । गर्त्तिकायाम् । त- न्तुवपनगृहे ॥ तन्तूनां शाला ॥

तन्तुसन्ततम् । न । ऊते । स्यूते । बुना कपड़ा इतिभाषा ॥

तन्तुसार । पुं । गुवाकवृक्षे ॥

तन्त्रम् । न । कुटुम्बकृत्ये ॥ सिद्धान्ते ॥



उत्तमौषधे ॥ प्रधाने ॥ तन्तुवाये ॥ परिच्छदे ॥ हेतौ ॥ उभयार्थप्रयो जके । उभयोरेकेनसकृत्प्रवृत्तौ ॥ इतिकर्त्तव्यतायाम् ॥ राष्ट्रे ॥ परच्छ न्दे ॥ करणे ॥ व्यर्थसधके ॥ तन्तौ ॥ स्वराष्ट्रचिन्तायाम् ॥ परिजने ॥ वाप साधने । तन्तुवायशलाकायाम् ॥ त न्यन्ते तन्त्रा ऽस्मिन । ष्ट्रन् ॥ प्रबन्धे ॥ शपथे ॥ धने ॥ गृहे ॥ वपनसाध ने ॥ कुले ॥ श्रुतिशाखाविशेषे ॥ शास्त्रविशेषे ॥ तल्लक्षणं यथा । स र्गश्च प्रतिसर्गश्च मन्त्रनिर्णयएवच । देवतानाञ्च संस्थान तीर्थानां चैव वर्णनम् ॥ तथैवाश्रमधर्मश्चविप्रस स्थानमेवच । संस्थानञ्चैवभूतानां यन्त्राणाञ्चैवनिर्णय ॥ उत्पत्तिर्विवु धानाञ्च तरूणांकल्पसंज्ञितम् । सं स्थान ज्योतिषां चैव पुराणाख्यानमे वच ॥ कोषस्य कथनञ्चैव व्रतानांप रिभाषणम् । शौचाशौचस्यचाख्या न नरकाणाञ्चवर्णनम् ॥ हरचक्रस्य चाख्यान स्त्री पुंसोश्चैवलक्षणम् । राजधर्मो दानधर्मो युगधर्मस्तथैव च ॥ व्यवहार कथ्यतेच तथाचाध्या त्मवर्णनम् । इत्यादिलक्षणैर्युक्त तन्त्रमित्यभिधीयते ॥ *॥ अथतस्य माहात्म्यम् । विष्णुर्वरिष्ठोदेवाना ह्र

तन्त्रम्

द्रानामुदधिस्तथा । नदीनाञ्चयथा गङ्गा पर्वतानांहिमालय ॥ अश्वत्थ सर्व्ववृक्षाणां राज्ञामिन्द्रोयथावर । देवीनाञ्चयथादुर्गा वर्णानां ब्राह्मणोयथा ॥ तथासमस्तशास्त्राणां तन्त्रशास्त्र मनुत्तमम् । सर्व्वकामप्रद पुण्य तन्त्र वैवेदसम्मितम् ॥ कीर्त्तनदेवदेवस्य हरस्यमतमेवच । पावन श्रद्दधानानामिहलोकेपरत्रचेति ॥ तच्च चतु षष्टिसंख्यकम् । यथा । सिद्धीश्वर महातन्त्र कालीतन्त्रंकुलार्णवम् । ज्ञानार्णवनीलतन्त्रं फेत्कारी तन्त्रमुत्तमम् ॥ देव्यागमम्उत्तराख्य श्रीक्रम सिद्धियामलम् । मत्स्यसूक्त सिद्धसार सिद्धिसारस्वत तथा ॥ वाराहीतन्त्र देवेशि योगिनीतन्त्रमुत्तमम् । गणेशविमर्षिणी तन्त्र नित्यातन्त्र शिवागमम् ॥ चामुण्डाख्य महेशानि मुण्डमालाख्यतन्त्रकम् । हसमाहेश्वर तन्त्र निरुत्तरमनुत्तमम् ॥ कुलप्रकाशक देविकल्प गान्धर्व्वकशिवे । क्रियासार निबन्धाख्य स्वतन्त्रतन्त्रमुत्तमम् ॥ सम्मोहनं तन्त्रराज ललिताख्य तथाशिवे । राधाख्य मालिनी तन्त्रं रुद्रयामलमुत्तमम् ॥ वृहत्श्रीक्रम तन्त्रञ्च गवाक्ष सुकुमुद्विनी । विशु

तन्त्रम्

द्धेश्वरतन्त्रञ्च मालिनीविजयं तथा ॥ समयाचारतन्त्रञ्च भैरवीतन्त्रमुत्तमम् । योगिनी हृदय तन्त्रं भैरवं परमेश्वरि ॥ सनत्कुमारक तन्त्रयोनितन्त्र प्रकीर्त्तितम् । तन्त्रान्तरञ्च देवेशिनवरत्नेश्वरतथा ॥ कुलचूडामणितन्त्र भावचूडामणीयकम् । मन्त्रदेवप्रकाशञ्च कामाख्यानामक तथा ॥ कामधेनु कुमारीच भूतडामरसज्ञकम् । मालिनीविजय तन्त्रं यामल ब्रह्मयामलम् ॥ विश्वसारं महातन्त्र महाकाल कुलामृतम् । कुलोड्डीश कुब्जिकाख्य यन्त्रचिन्तामणीयकम् ॥ एतानितन्त्ररत्नानि सफलानियुगेयुगे । कालीविलासकादीनि तन्त्राणि परमेश्वरि ॥ कालकल्पे सुसिद्धानि अश्वक्रान्तासु भूमिषु । महाचीनादितन्त्राणि कलिकल्पे महेश्वरि ॥ सुसिद्धानि वरारोहे रथक्रान्तासु भूमिषु इति सिद्धिसारस्वतम् ॥ * ॥ अपिच । चतुषष्टिश्च तन्त्राणि यामलादीनि पार्व्वति । सफलानीह वाराहे विष्णुक्रान्तासु भूमिषु ॥ कल्पभेदेन तन्त्राणि कथितानिच यानिच । पाषण्डमोहनायैव विफलानीह सुन्दरीति महाविश्वसारतन्त्रम् ॥ चि । आयत्ते

॥ साङ्ख्यादिशास्त्रविशेषे ॥ तन्यन्ते व्युत्पाद्यन्ते तत्त्वान्यनेनेति व्युत्पत्तेः ॥ तननम् । तन्यतेऽनेन वा । तनु० । ष्ट्रन् ॥ यद्वा । तन्त्रणम् । तन्त्र्यते वा । तत्रि कुटुम्बधारणे । घञ् ॥

तन्त्रकम् । न । अनाहते । नवीनवस्त्रे ॥ तन्त्रादचिरापहृते इति साधु ॥

तन्त्रकाष्ठम् । न । तन्त्रवायस्य तुर्याम् ॥

तन्त्रता । स्त्री । अनेकमुद्दिश्य सकृत्प्रवृत्तौ ॥ यथा । आग्नेयाष्टकपालैन्द्रदध्यैन्द्रपयोयागानां यथा आग्नेयाष्टाकपालोपांशुयागाग्नीषोमीयैकादशकपालयागानां चर्यायां सकृत् सकृदनुष्ठितेन प्रयाजाद्यङ्गेनोपकार सिध्यति । तथा नानाब्रह्मवधसत्त्वे सर्वोद्देशेन सकृत् प्रायश्चित्ते कृते ब्रह्मवधजन्यपापनाश, । तन्त्रता चाहृतश्च । अष्टार्थैकजातीयकर्मणां कालदेशकर्त्रादीनां प्रयोगानुबन्धैर्वैधहेतुभूतानामभेदे उद्देश्यविशेषाग्रह इति । एतच्च सातोऽधिकारीभवति दैवेपैत्र्ये च कर्मणि । पवित्राणां तथाज्यस्य दानेचविधिदर्शिते इति विष्णूक्तम् । अत्रास्यानाचरेत्कर्मजपहोमादिकिञ्चनेति दर्शेऽत्र क्रियाङ्ग्रज्ञान कर्मसंस्कारद्वारैव तद्विनकर्त्तव्याशेषकर्मार्थमेकमेव नतु प्रतिकर्मैककर्त्तव्यम् । इति प्रायश्चित्ततत्त्वम् ॥

तन्त्रवाप । पु । तन्त्रवाये ॥ तन्त्रवोवितन्यन्ते यत्र तत् तन्त्रम् । तद् वपति । टुवप० । कर्मण्यण् ॥

तन्त्रवाय । पु । कुविन्दे ॥ वर्णसङ्करजातिरयम् ॥ अस्योत्पत्तिर्यथा । ताम्रकुट्टाच्छङ्खकार्यां मणिकारस्त्वजायते । मणिकारात् ताम्रकुट्ट्यां मणिवन्धो व्यजायत ॥ मणिवन्धान्मणिकार्यां तन्त्रवायाश्च जज्ञिरे । इति पराशरपद्धति ॥ तन्तवो वितन्यन्ते यस्मिन् । तत् तन्त्रम् । तद् वयति । वेञ्० । ह्वावामश्चेति कापवादोऽण् ॥

तन्त्रिका । स्त्री । गुडूच्याम् ॥ तन्त्रयते । तत्रि० । ण्वुल् ॥ तन्त्र्येव वा । कन् । ह्रस्व ॥

तन्त्रिपालक । पु । जयद्रथनृपे ॥

तन्त्री । स्त्री । वीणागुणे ॥ अमृतायाम् । गुडूच्याम् ॥ देहशिरायाम् ॥ नाड्याम् ॥ रज्ज्वाम् ॥ नदीविशेषे ॥ युवतीप्रभेदे ॥ वीणाप्रभेदे । तन्त्रयते । तत्रि० । अवितॄस्तृतन्त्रिभ्य ईः ॥

तन्द्रा । स्त्री । निद्रायाम् ॥ आलस्ये । प्रमीलायाम् ॥ तस्या निदान लक्षणञ्च । यथा । तमोवातकफात् तन्द्रेति ॥ इन्द्रियार्थेष्वसंवित्ति गौर

वं जृम्भां क्लम । निद्रार्त्तस्येव यस्येहा तस्य तन्द्रां विनिर्दिशेदिति ॥ निद्रायां प्रवृत्तस्य क्लमाभाव' । तन्द्रायान्तु प्रबोधितस्यापि क्लम इत्यनयोर्भेद ॥ तत् राति । तत्पूर्वाद्रातेरातोनुपेतिक । टाप् ॥ तत् द्रातिवा । द्राकुत्सायागतौ । सृश्विगृह्वीत्यादिना तदोनालत्वं निपात्यते ॥ निद्रातन्द्रेतिवा निपात्यते ॥ तन्द्राच सुखस्य भार्या निद्राया कन्या प्रीतेर्भगिनी । यथा । निद्राकन्याच तन्द्रा सा प्रीतिरन्यासुखप्रिये । याभ्यांव्याप्त जगत्सर्वं विधिपुत्रविधेर्विधाविति ॥

तन्द्रालु' । त्रि । निद्रालौ ॥ तत् द्राति । द्रा० । स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्यआलुजितितच्छीलादिषु आलुच् । तच्छब्दस्य नान्तत्वं समासस्य निपात्यते ॥

तन्द्रि । स्त्री । आलस्ये ॥ निद्रायाम् ॥ तन्द्राया करणम् । तत्करोतीतिराय न्तादिचइ ॥ यद्वा । तदि चेतोबाधातु ॥ तस्मात् वङ्क्याद्ययश्चेत्यौणादिक क्रिन् ॥

तन्द्रिका । स्त्री । तन्द्र्याम् ॥

तन्द्रित । त्रि । अलसे ॥ तन्द्रा सञ्जाता अस्य । ता० इतच् ॥

तन्द्री । स्त्री । अत्यन्तश्रमादिना सवेन्द्रियासामर्थ्ये । प्रमीलायाम् ॥ तन्द्र्या कृदिकारादितिङीष् ॥ तत् रातिवा । आतोनुपेतिकः । गै०ङीष् ॥ तत्द्रातिवा । द्रा० । निद्रातन्द्रेतितदोनालत्वं निपात्यते ॥



तन्निष्ठ' । त्रि । सर्वकर्मसन्न्यासेन ब्रह्मात्मैक्यविचारपरे ॥ तस्मिन्नेव ब्रह्मणि सर्वकर्मानुष्ठानविक्षेपनिवृत्त्या स्थितिर्यस्येत्यर्थ ॥ तस्मिन्स्थिते ॥

तन्मय । त्रि । तद्भावभाविते ॥ अभेदे ॥

तन्मात्रम् । न । शब्दादीनासूक्ष्मेषु । शब्दतन्मात्राणि स्पर्शतन्मात्राणीत्यादिपदवाच्येषु ॥ नत्वेषा शान्तादिविशेषोऽस्ति । यथोक्तविष्णुपुराणे । तस्मिंस्तस्मिंस्तुतन्मात्रा तेनतन्मात्रता स्मृता । तन्मात्राण्यविशेषाणि अविशेषा स्ततोहिते ॥ न शान्तानापिघोराश्च न मूढाश्चाविशेषिण इति ॥ सा मात्रा यस्मिन् तत् । त्रि । तावन्मात्रे ॥

तन्यतु । पु । वायौ ॥ निशि ॥ तनोति । तन्० । ऋतन्यञ्जीत्यादिना यतुच् ॥ तन्यतुर्गर्जितमिति तन्यतुरशनिरितिच वेदभाष्यम् ॥

तन्ववस्था । स्त्री । अभिव्यक्तस्यापि सत्कार्यैऽस्याभावात् कार्याजनने ॥

तन्वि । स्त्री । पृश्निपर्ण्याम् ॥

तन्वी । स्त्री । कृशाङ्ग्याम् ॥ वोतोगुणवचनादितिङीष् । तनुशब्दस्तनुत्वगुणमुक्ता तद्द्रव्यमभिधत्त इति गुणवचन ॥ शालपर्ण्याम् ॥ सङ्कृतिसञ्चके चतुर्विंशत्यक्षरात्मके वृत्ते ॥ भूतमुनीनैर्यतिरिह भतना स्भौ भनयाश्चरद्भिर्भवतितन्वी ॥ यथा । माधवमुग्धे मधुकरविरुतै कोकिलकूजितमलयसमीरे । कम्पमुपैत्ता मलयजसलिले प्लावनतोप्यऽविरततनुदाहा ॥ पद्मपलाशैर्विरचितशयने देहजसञ्ज्वरभरपरिदूने । निश्वसतीसा मुहुरतिपवन ध्यानसखेतवनिवसतितन्वी ॥ इति ॥

तप । पु । ग्रीष्मे । ज्येष्ठाषाढयो. ॥ तपति । तपसन्तापे । पचाद्यच् ॥

तपःकरः । पु । तपस्वीमत्स्ये ॥ त्रि । तपस्याकारके ॥

तपःक्लेशसह । त्रि । दान्ते ॥ तपसं क्लेश. । सहते । षह० । अच् । तपःक्लेशस्य सह. ॥

तपःस्थ. । त्रि । तपसिस्थिते ॥ सुपिस्थ इतिक. ॥

तपःस्थली । स्त्री । काश्याम् ॥

तपती । स्त्री । छायानामसूर्यपत्न्याम् ॥ सूर्यसुतायाम् ॥ नदीविशेषे ॥

तपन । पु। सवितरि ॥ अरुष्करे । भल्लातवृक्षे ॥ निरयान्तरे ॥ ग्रीष्मे ॥ अर्कवृक्षे ॥ क्षुद्राग्निमन्थवृक्षे ॥ सूर्यकान्तमणौ ॥ तापे ॥ तपति । तप० । ल्यु ॥

तपनच्छद । पु । आदित्यपत्रवृक्षे ॥

तपनतनया । स्त्री । यमुनायाम् ॥ तपनस्य तनया ॥ शमीवृक्षे ॥

तपनमणि । पु । सूर्यकान्तमणौ ॥

तपनात्मजा । स्त्री । गोदावरीनद्याम् । यमुनायाम् ॥ तपनस्यआत्मजा ॥

तपनी । स्त्री । गोदावर्याम् ॥

तपनीयम् । न । स्वर्णे ॥ तप्यते ऽनेन । तप० । कृत्यल्युटइत्यनीयर ॥

तपनीयकम् । न । सुवर्णे ॥

तपनेष्टम् । न । ताम्रे ॥

तपा३ । पु । माघमासे ॥ शिशिरे ॥ तपन्त्यस्मिन् । तप० । असुन ॥

तप४ । न । जनलोकोपरिवर्त्तिनि लोकविशेषे ॥ यथा । तपो ऽर्ककोटियैत्रास्ते महायोगी सनन्दन । ऋभु. सनत्कुमारश्च सनकश्च महातपा इति ॥ ज्ञानादिलक्षणेऽत्रह्मणि ॥ अन्तर्यामिब्राह्मणादृष्ट्या तपस्याज्ञापयती स्मृतौ. ॥ आलोचने ॥ ज्ञाने ॥ स्वधर्मे । स्वाश्रमविहितकर्मणि ॥ वेधक्लेशजनककर्मणि ॥ नवमभवने ॥ कामानश

ने ॥ तपोनानशनात्परम् ॥ क्षुत्पिपासाशीतोष्णादिद्वन्द्वसहने ॥ चित्तप्रसादहेतुभूते व्रतनियमोपासनादिकर्मणि ॥ काष्ठमौनाकारमौनादिव्रते ॥ कायेन्द्रियमनसां समाधाने ॥ शास्त्रीयमार्गेण कायेन्द्रियमनसां शोषणे ॥ कृच्छ्रचान्द्रायणप्राजापत्यादिरूपे प्रायश्चित्ते ॥ अशास्त्रविहिततप्तशिलारोहणादौ ॥ वानप्रस्थाश्रमधर्मे ॥ तच्च शारीरादिभेदात्त्रिविधम् । यथा । देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् । ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत् । स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः । भावसंशुद्धिरित्येतत् तपो मानसमुच्यते ॥ तदपि सात्त्विकादिभेदात् त्रिविधं यथा । श्रद्धया परया तप्तं तपस्तत् त्रिविधं नरैः । अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ सत्कारमानपूजार्थं तपो दम्भेन चैव यत् । क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ मूढग्राहेणात्मनो यत् पीडया क्रियते तपः । परस्योत्सादनार्थं वा तत्तामसमुदाहृतमिति ॥ मनसश्चेन्द्रियाणाञ्च ह्यैकाग्र्यं परमं तपः ॥ ब्राह्मणस्य तपो ज्ञानं तपः क्षत्रस्य रक्षणम् । वैश्यस्य तु तपो वार्त्ता तपः शूद्रस्य सेवनम् ॥ तपनम् तप्यतेऽनेन वा । तप० । तपति ईष्टे । तप ऐश्वर्ये वा । असुन् ॥

तपस । पु । चन्द्रे ॥ तपति । तप० । अत्यविचमितमिनमीत्यादिना ऽसच् ॥ पक्षिणि ॥

तपस्तच । पु । इन्द्रे ॥ इति हेमचन्द्रः ॥

तपस्थ । त्रि । तपसि स्थिते ॥ सुपिस्थ इति कः । खर्परे शरि वा विसर्गलोपः ॥

तपस्य । त्रि । फाल्गुने मासि ॥ अर्जुने ॥ तपसि साधु । तत्र साधुरिति यत् ॥ न । कुन्दपुष्पद्रुमे ॥

तपस्या । स्त्री । नियमस्थितौ । व्रतचर्यायाम् । तपश्चर्यायाम् ॥ तपश्चरति तपस्यति । कर्मणो रोमन्थतपोभ्यां वर्त्तिचरोरिति क्यङ् । तपस्यति इति तपस्या । अप्रत्ययादिति स्त्रियामप्रत्ययः । टाप् ॥

तपस्वी । त्रि । तापसे । पारिकाङ्क्षिणि ॥ कृच्छ्रचान्द्रायणादितपःप्रधाने वानप्रस्थादौ ॥ अनुकम्प्ये । दीने ॥ प्रशस्तं तपः ॥ तपोऽस्यास्ति । तपःसहस्राभ्यामिति विनि ॥ पु । ना

रदे ॥ घृतकाण्डे ॥ तप्ख्यामाच् इति गौडभाषा प्रसिद्धे मत्स्ये। चे छके ॥ इतिराजनिर्घण्टः॥

तपस्विनी । स्त्री । तपोयुक्तायाम् ॥ जटामांस्याम् ॥ कटुरोहिण्याम् ॥ महाश्रावणिकायाम् ॥ सन्तापवत्याम् ॥ अन्नेभ्यइतिङीप् ॥

तपस्विपत्र । पु । दमनकवृक्षे ॥

तपात्यय । पु । वर्षाकाले ॥ तपस्यात्ययो यस्मिन् ॥

तपित । त्रि । तप्ते। तपा इतिभाषा॥

तपिनी । स्त्री नक्षत्रे ॥

तपुः । न । सूर्ये ॥ अग्नौ ॥ शत्रौ ॥ तपति । तप० । अर्त्तिपृवपियजितनिधनितपिभ्योनिदित्युसि'। तपुषी तपूंषि ॥

तपोधन. । पु । तापसे । तपस्विनि ॥ दमनकवृक्षे ॥ तपोधनयस्य ॥

तपोधना । स्त्री । मुण्डीर्याम् ॥

तपोनिष्ठ । पु । सदाध्ययननिष्ठे तापसविशेषे ॥

तपोयत्न । पु । तपस्विनि ॥ कृच्छ्र चान्द्रायणादितपएवयत्नो ऽस्य ॥

तपोवट. । पु । ब्रह्मावर्त्तदेशे ॥

तपोवनम् । न । गुह्यकलोकवासफलके तीर्थविशेषे॥

तप्त । त्रि । प्रज्वलिते ॥ तप्यतेस्म । तप० । क्त ॥ तापयुक्ते । सन्तापिते॥

तप्तकम् । न । तवा इति लोकप्रसिद्धे पोलिकादिसाधने ॥

तप्तकुम्भ । पु । नरकविशेषे ॥

तप्तकृच्छ्र । पु । व्रतविशेषे ॥ यथा । तप्तकृच्छ्रं चरन् विप्रो जलक्षीरघृतानिलान्। प्रतित्र्यहं पिबेदुष्णान् सकृत्स्नायी समाहित'इति ॥ अथ पराशरोक्तो विशेष ॥ यथा। षट्पलन्तु पिबेदम्भ स्त्रिपलन्तु पय पिबेत्। पलमेकंपिबेत्सर्पिस्तप्तकृच्छ्रं विधीयते। इति ॥ पयोघृतमुदकं वायुंत सप्रतित्र्यहं पिबेत् सतप्तकृच्छ्र । इति गौतम ॥

तप्तपाषाणकुण्डम् । न । नरक विशेषे॥

तप्तबालुक । पु । नरकविशेषे ॥

तप्तमासकम् । न । पुण्यपापयो परीक्षाविशेषे ॥

तप्तमुद्रा । स्त्री । शरीरधार्याग्नितप्तधातुमयभगवदायुधचिह्ने ॥ यथा । आषाढशुक्लद्वादश्यां हरौशिशयिषौसति । वैष्णव पारणं कृत्वा तप्तमुद्राश्च धारयेत् ॥ ब्राह्मण क्षत्रियो वैश्य शूद्रश्चैकान्तितद्व्रये । कुर्वन्त्वात्मार्पणं तप्तमुद्राभि र्देहं मङ्कयेत् ॥ * ॥ तप्तमुद्राधारणनिष्ठतोक्ता वायुपुराणे । अग्निनैवपसन्तप्त चक्र

मादाय वैष्णव । धारयेत् सर्ववर्णा
ना हरिसालोक्यसिद्धये ॥ ब्रह्माण्डे ।
कृत्वा धातुमयीं मुद्रां तापयित्वा स्व
कां तनुम् । चक्रादिचिह्नितां भूप धा
रयेद्वैष्णवो नरः ॥ नारदीयपञ्च-
रात्रे । द्वादशारन्तु षट्कोणं वलयत्र
यसंयुतम् । हरेः सुदर्शनं तप्तं धार
येत् तद्विचक्षणः ॥ सौपर्णे च श्रीभ
गवद्गरुडसंवादे तप्तमुद्राप्रकरणे ।
गरुडमन्त्रविशेषेण सर्ववर्णेष्वयविधिः ।
विप्रो वा क्षत्रियो वापि वैश्यः शूद्रस्त-
थैव च ॥ पाद्मे । अग्निहोत्रं यथा नि
त्यं वेदस्याध्ययनं यथा । ब्राह्मणस्य त
थैवेदं तप्तचक्रादिधारणम् ॥ किञ्च
तत्रैवोत्तरखण्डे श्रीशिवोमासंवादे ।
शङ्खचक्राङ्कनं कुर्याद्ब्राह्मणो बाहु-
मूलयोः । हुताग्निनैव सन्तप्य सर्वपा
पापनुत्तये ॥ चक्रं वा शङ्खचक्रे वा त
थान्यायुधानि वा । धारयित्वैव विधि
वद् ब्रह्मकर्म समारभेत् ॥ * ॥ कि
ञ्च तत्प्रसङ्ग एव । अधृत्वा विधिना च
क्रं ब्राह्मणः प्राकृतो भवेत् । किञ्च ।
न तस्य किञ्चिदश्नीयाद् पिक्रतुसह-
स्रिणः । सर्ववेदविदो वापि सर्वशा
स्त्रविशारदः । अधृत्वा विधिना चक्रं
ब्राह्मणः पतितो भवेत् ॥ किञ्च ।
तप्तेनैवाङ्कनं कुर्याद्ब्राह्मणस्य विधा



नतः । श्रौतस्मार्त्तादिसिद्ध्यर्थं मन्त्र-
सिद्ध्यै तथैव च ॥ हरेः पूजाधिकारा
र्थं चक्रं धार्यं विधानतः । वैष्णवत्व
स्य सिद्ध्यर्थं भक्तिसिद्ध्यै विशेषतः ॥
किञ्च । उपवीतादिवद्धार्याः शङ्ख
चक्रादयस्तथा । ब्राह्मणस्य विशेषेण
वैष्णवस्य विशेषतः ॥ * ॥ अथ । यो
हवै सुश्लोकमौले धर्मानमुतिष्ठमा-
नोऽग्निना चक्रं धत्ते । अग्निर्वै सह
स्रारः सहस्रारो नेमिर्नेमिना तप्तत
नुः सायुज्य सलोकतामाप्नोतीत्या
द्याः श्रुतयो बह्व्य उदाहृताः सन्ति-
वेङ्कटाचार्य्यादिभिः । तद्भिन्नानि पुरा
णवचनानि च तानि गौरवभिया न लि
खितानि । मन्वादिस्मृतिषु रामाय-
णभारतादिष्वदृष्टत्वात् मन्वर्थविप
रीताया स्मृतेरप्रशस्तत्वाच्च ॥

तप्तरूपकम् । न । रौप्ये ॥
तप्तसुराकुण्डम् । न । नरकान्तरे ॥
तप्तसूर्मिकुण्डम् । न । नरकविशेषे ॥
तप्ताङ्गार । पु । महानरकान्तरे ॥
तम । पु । तमोगुणे ॥ तमालवृक्षे ॥
स्वर्भानौ ॥ न । पादाग्रे ॥ अन्धकारे ॥
ताम्यति । तमु ग्लानौ । पचाद्यच् ॥
तमनम् । भावेघञ्वा । नोदात्तोप
देशस्येति नवृद्धिः ॥
तमःपतिः । पु । क्रियाद्वहनिरोद्धरि वा

मदेवनाथे ॥

तमःप्रधान । पु । तमोगुणप्रधानमा योपाधिके परमात्मनि ॥ त्रि । तमो गुणप्रधाने ॥

तमःप्रभ । पु । नरकविशेषे ॥

तमःप्रभा । स्त्री । नरकभूमिभेदे ॥

तमक । पु । श्वासरोगप्रभेदे ॥

तमक्क' । पु । इन्द्रकोषे । मञ्चके ॥

तमत । त्रि । तृषिते । तृष्णापरे ॥ ताम्यति । तमुकाङ्क्षायाम् । भृम इषियजीत्यादिनाऽतच् ॥

तमप्रभ । पु । नरकविशेषे ॥

तमरम् । न । वङ्गे ॥ इतिहेम ॥

तमः । न । चक्षुर्दर्शननिरोधके शार्वरादिध्वान्ते ॥ शोके ॥ पापे ॥ का र्याकार्यविवेके ॥ अविद्यायाम् ॥ मन्दान्धकारे ॥ मोहान्धकारे ॥ वि- शेषदर्शनविरोधिदोषे ॥ सर्वदेहि- नां मोहनेप्रकृतेर्गुणविशेषे ॥ प्र- मादालस्यनिद्राभिस्तन्निबध्नाति ॥ गु णवरणकमेवतमःइत्ति साङ्ख्याचा- र्याः । तमस्त्वयमविक्रियम् । यन्मोह हेतुस्तन्मोहात्मकं तमः । भेदस्त मसोऽष्टविध । तमसोऽविद्याया अष्टविधोभेदः । अष्टसु अव्यक्तमह दहङ्कारपञ्चतन्मात्रेष्वनात्मस्वात्मबु द्धिरविद्या तमस्तस्याष्टविधविषयत्वा दष्टविधत्वम् ॥ मले ॥ ताम्यति त म्यतेऽनेनवा । तमुग्लानौ । असुन् ॥ पु । न । विधुन्तुदे ॥

तमसम् । न । अन्धकारे ॥ ताम्यतिग्ला निं प्राप्नोत्यनेनाक्षिन्वा । तमु० । अत्यविचमितमीत्यादिनाऽसच् ॥

तमसा । स्त्री । नदीविशेषे ॥

तमस्तति । स्त्री । ध्वान्ते । अन्धकार समूहे ॥ तमस स्तति ॥

तमस्विनी । स्त्री । क्षपायाम् । रात्रौ ॥ तमोऽस्त्यस्याम् । अस्मायामेधे- तिविनि ॥ हरिद्रायाम् ॥

तमा । स्त्री । रजन्याम् ॥ तमालद्रुमे ॥ ताम्यत्यस्याम् । तमु० । अच् । टाप् ॥

तमाल । पु । तिलके । पुण्ड्रे ॥ खड्गे ॥ असौ ॥ वरुणद्रुमे ॥ तापिच्छे । का लस्कन्धे ॥ तमाल, शाखवदेशो द्रा इविस्फोटहृतपुन ॥ कृष्णखदिरे ॥ ताम्यति । तमु० । तमिविशिविडी तिकालन् ॥ न । पत्रके । तेजपात इतिभाषा ॥

तमालकम् । न । सुनिषण्णशाके ॥ प त्रके ॥ पु । न । तमालद्रुमे ॥

तमालपत्रम् । न । तापिच्छ । कालस्क न्धे ॥ तिलके ॥ पत्रके । तेजपात- इतिभाषा ॥ तमालस्य पत्रमिव तदा

कृतिस्थात् ॥

तमालिका । स्त्री । ताम्रवल्ल्याम् ॥ भूम्यामलक्याम् ॥ तामलिप्तदेशे ॥

तमाली । स्त्री । ताम्रवल्ल्याम् ॥ वरुणवृक्षे ॥

तमि । स्त्री । रात्रौ ॥

तमिस्रम् । न । कोपे ॥ तिमिरे । अन्धकारे ॥ तमोऽस्त्यत्र । भावप्रधानो निर्देशः । ज्योत्स्नातमिस्रेति साधु ॥ तमिस्राख्याअयस्येनास्येतिवा । अर्शआद्यच् ॥

तमिस्रपक्षः । पुं । कृष्णपक्षे ॥

तमिस्रा । स्त्री । कृष्णपक्षनिशायाम् ॥ भूतरात्रौ ॥ दर्शयामिन्याम् ॥ तमस्तती । तमसांसमूहे ॥ तमस्यन्धभूतानि तमांसि विद्यन्ते । तमोवस्तुत्वमस्त्यस्याम् । ज्योत्स्नातमिस्रेति तमसउपधाया इत्वं प्रत्ययश्चनिपातितः । टाप् ॥

तमी । स्त्री । यामिन्याम् । रात्र्याम् ॥ ताम्यन्त्यस्याम् । तमु० । इन् । कृदिकारादिति ङीष् ॥ हरिद्रायाम् ॥

तमोगुणः । पु । विषादात्मके । विषादमोह स्वरूपे ॥

तमोघ्न. । पु । सूर्ये ॥ वह्नौ ॥ चन्द्रे ॥ बुद्धे ॥ शङ्करे ॥ विष्णौ ॥ तमोहन्ति । हन० । अमनुष्य कर्तृकेचेतिटक् ॥

तमोज्योति । पु । खद्योते ॥ तमसि ज्योतिरस्य ॥

तमोनुत् ह । पु । चन्द्रे ॥ सूर्ये ॥ वह्नौ ॥ दीपे ॥ तमोनुदति । नुद० । क्विप् ॥

तमोनुदः । पुं । प्रकृते. मेरक्ते स्वयम्भुवि ॥ आदित्ये ॥

तमोपह । पु । सर्वज्ञे ॥ चन्द्रे ॥ वह्नौ ॥ तमोऽपघ्नन्तीति विग्रहे अपेक्लेशतमसोरित्यनेन अपपूर्वाद्धन्तेस्तमसि कर्मोपपदे कर्त्तरि डः ॥ जिने ॥

तमोभित् ह । पु । तमोनुदर्थे ॥ खद्योते ॥ तमोभिनत्ति । भिदिर्० । क्विप् ॥

तमोमणि । पु । खद्योते ॥ तमसोमणिरिव ॥ गोमेदकमणौ ॥

तमोलिप्ती । स्त्री । तमोलुक इतिख्याते प्रसिद्धे देशे । तामलिप्ते । वेलाकूले ॥

तमोविकार. । पु । रोगे ॥

तमोविकास. । पु । मूलतःसर्गे पश्वादिस्थावरान्ते ॥ मूलतः सर्गोविमोहमयश्चासमोवृतः ॥

तमोहरः । पुं । चन्द्रे ॥ न । ज्योतिषि ॥ निर्गुणकामभागेच सप्तभागेऽङ्कुतानिशा । मध्येनाथः स्वयं ज्योतिरात्मा

तिर्य्यतमोहरम् ॥ त्रि । तमसोहर
यकर्त्तरि ॥ हरति । हञ् । अच् ।
तमसोहरः ॥

तम्पा । स्त्री । } गवि । वैारभेय्याम् ॥
तम्बा । स्त्री । } इतिहेमचन्द्र ॥

तम्बिका । स्त्री । तम्बाम् ॥

तम्वी । स्त्री । तयी इति भाषाप्रसिद्धे
कान्दविकभाण्डे ॥

तय. । पु । रचके ॥ तयति । तयरच-
णे गतौाच । अच् ॥

तरः । पु । तरणे ॥ न । लोम्रे ॥ तरति
। तृ० । अच् । तरणवा । कर्तरिच् ॥

तरचः । पु । लरच इति प्रसिद्धे तरचौ ॥

तरचु । पु । मृगादने । तेंदुवाबाघ इ
तितरच इत्यादिनाम्नाख्याते चघु
व्याघ्रे ॥ तरगतिं मार्गं वा चिणोति
। चिणुहिंसायाम् । मित० डु ॥

तरचुक । पु । तरचौ ॥ स्वार्थेकन् ॥

तरङ्ग । पुं । वायुना नद्यादिजलस्य ति
र्यगूर्द्ध्वप्लवने । भङ्गे । ऊर्म्मौम् । लह
र हेउ इत्यादि भाषा ॥ तरति । तृ
प्लवनसन्तरणयो । तरत्यादिभ्यश्च
त्यङ्गच् ॥ अश्वादिसमुत्काले ॥

तरङ्गिणी । स्त्री । नद्याम् । तटिन्या-
म् ॥ तरङ्गा सन्त्यस्याम् । अतइनि
। पुष्करादित्वादिनिर्वा । ऋन्नेभ्यो
ङीप् ॥

तरङ्गितः । त्रि । भङ्गिमति । सञ्जात-
तरङ्गे ॥ तरङ्गा सञ्जातास्य । ता०
इतच् ॥ यद्वा । तरङ्गवत्कुतः अत्य
न्तात् तत्करोतीतिणिच् कर्त्तरिक्तः
। णाविष्टवद्भावान्मतुपोछुक् ॥

तरण. । पु । भेलके । उडुपे । डेँगाइति
भाषा ॥ स्वर्गे ॥ न । पारगमने । सन्त
रणे ॥ प्लवनपूर्व्वकदेशान्तरगमने ॥

तरणिः । पु । घुमणौ । सूर्य्ये ॥ भेलके
॥ अर्के । किरणे ॥ ताम्रे ॥ स्त्री ।
नौाकायाम् ॥ घृतकुमार्य्याम् ॥ तर-
न्त्यनेनसंसारम् । तरन्त्यनयाका ।
तृ० । अर्त्तिसृधृधम्यश्याद्निातर
तेरनि. ॥

तरणिपेटकः । पुं । काष्ठाम्बुवाहिन्याम् ॥

तरणिरत्नम् । न । माणिक्ये ॥

तरणी । स्त्री । नावि ॥ घृतकुमार्य्याम्
॥ पद्मचारिण्याम् ॥ कृदिकारादि
तिङीष् ॥

तरण्ड । पु । न । वडिशीसूत्रबन्धन
काष्ठे । छड इतिजगनञ्चतिचभाषा ॥
प्लवे ॥ नौाकायाम् ॥ कुम्भतुम्बीरम्भा
दिजप्लवे ॥ पु । देशविशेषे ॥ तर-
ति । तृ० । वाहुलकादण्डन् ॥

तरण्डपादा । स्त्री । } नावि ॥ इ-
तरण्डा । स्त्री । } तिशब्दर-
तरण्डी । स्त्री । } त्नावली ॥

तरतम । अ । न्यूनाधिकभावेनेत्यर्थे ॥
तरत्-द् । स्त्री । भेलके । प्लवे ॥ प्रवमा
के ॥ कारण्डवविहङ्गमे ॥
तरदी । स्त्री । कण्टकिवृक्षविशेषे ।
तीगायाम् । रक्तबीजकायाम् ॥
तरण्टी । स्त्री । पक्वान्नविशेषे ॥ यथा
। घृतेन मर्दितां दद्यात् कनिक्यां फे
नयेत् ततः । विधायवटिका स्तस्या
घृते मन्दाग्निना पचेत् ॥ प्रक्षिप्ता
खण्डपाकेन कर्पूरेण विमिश्रयेत् ।
ततएता' समरिचा तरण्ड्यस्तु ता
स्मृता. ॥ बल्या पुष्टिकरी हृद्या वृ-
ष्या पित्तानिलापहा । सुस्निग्धा क
फदाश्चर्यं किञ्चित्तन्धामकुट्टिता ॥
तरन्त । पु । समुद्रे ॥ भेके ॥ आसारे ।
राक्षसे ॥ तीर्यंते । तॄ० । तॄभूवहि
वसीत्यादिनाझच् सचषित् ॥
तरन्ती । स्त्री । नौकायाम् ॥ तरति नी
र्यते ऽनयावा । झच् षित्वान्ङीष् ॥
तरपण्यम् । न । आतरे । नद्यादिसन्ता
रशुल्के ॥ तरणम् । तॄ० । अदोर
प् । तरस्य पण्यम् ॥
तरम्बुजम् । न । तरबूज इति प्रसिद्धे
फले ॥ यथा । ज्येष्ठमासि महेशा
नि पौर्णमास्यां निशार्द्धके । तृष्णा
तुरा महाकाली भ्रमन्ती पितृका
नने ॥ तत्र सा चाम्रछाया तत्रैफल



दत्तं तरम्बुजम् ॥ तत्फलम्भक्षणात्
तृप्ताबरदासिहरप्रिया ॥ यो मे दद्या
त्फलं रम्यं सचिरायुश्चतुर्युगमित्यु
क्त्वाकामाख्यातन्त्रम् ॥
तरल । पु । हारमध्यमणौ ॥ हारे ॥
तले ॥ त्रि । चञ्चले ॥ कामुके । षि
ड्गे ॥ भास्वरे ॥ मध्यशून्यद्रव्ये ॥ द्रवी
भूते ॥ तरति । तॄ० । अलच् ॥ त
रलातिवा । आतइतिकः ॥ वृषादि
त्वाद्वा कलः ॥
तरलनयना । स्त्री । चञ्चलनेत्रायाबनि
तायाम् ॥ तरले लोले नयने यस्याः ॥
तरलनयनि । पु । वर्णवृत्तविशेषे ॥
द्विजवरगणयुग मुपनय सकुसुमन
गणमिहरचय । सुदतिविमलमति
फणिपतिनिगदितमतरलनयनिरिति
॥ यथा । अपहर पुरहर भ्रमहर म
भिनवकलियुगभयहर । हिमगिरि
विहितशयनवर सुकृतसुलभशशध
रधरेति ॥
तरललोचना । स्त्री । चञ्चललोचना
याम् ॥ तरले लोचने यस्याः ॥
तरला । स्त्री । यवाग्वाम् ॥ सुरायाम्
॥ मधुमक्षिकायाम् ॥ तरलाति ।
ला० । क । टाप् ॥
तरलायित । पु । चञ्चलाचरिते ॥
तरलित । त्रि । आन्दोलिते । प्रेङ्खोलि

ते । कम्पिते । धूते । प्रेङ्खिते । प्लुचिते । त० इतच् ॥

तरवारि । पु । तरवार इतिप्रसिद्धे खड्गे ॥ इतिहेमचन्द्रः ॥ चतुरङ्गारिपोः सेनाम्छिन्दन्ती स्तरवारिभिरितित न्नराजस्य ॥ विशेषस्त्वस्यान्यत्र खड्गपरीक्षायांयुक्तिकल्पतरौद्रष्टव्यः ॥

तरस् । न । बले ॥ रोगे ॥ जवे । वेगे ॥ सवेगगतिवचनेऽस्यप्रयोग ॥ तीरे ॥ कपौ । प्लवगे ॥ वेगाख्यगुणे ॥ तरत्यनेन । तॄ० । असुन् ॥

तरसम् । न । मांसे ॥ तरोवलमस्त्यस्मिन् । अर्शआद्यच् ॥

तरसा । अ । झटित्यर्थे । शैघ्र्ये ॥

तरस्वानम् । न । षट्टे ॥ तरस्वानम् ॥

तरस्वी । पु । गरुडे ॥ वायौ ॥ त्रि । शूरे ॥ वेगिनि ॥ तरोवलं जवोवाऽस्यास्ति । अस्मायामेधास्रजोविनिः ॥

तरान्धु । पु । नौविशेषे । होडे । वहने ॥

तरालु । पु । नौकाविशेषे ॥

तरि । स्त्री । नौकायाम् ॥ वस्त्रादीनांपेटके ॥ दशायाम् ॥ तरन्त्यनया । तॄ० । अचइः ॥

तरिक । पु । प्लवे । भेलके ॥

तरिका । स्त्री । नावि ॥

तरिणी । स्त्री । नौकायाम् ॥

तरिता । स्त्री । तर्जन्याम् ॥ गाँजा इतिभाषाप्रसिद्धमत्तायाम् ॥ यथा । सविद्या कालकूटश्च ताम्रकूटश्च धुस्तुरम् । अहिफेन खर्जुरस स्तारिका तरिता तयेतितन्त्रम् ॥

तरिरथ । पु । अरित्रे ॥ इतिहारावली ॥

तरी । स्त्री । वस्त्रादिपेटके ॥ द्रोण्याम् ॥ वेडायाम् । नावि ॥ गदायाम् ॥ धूमे ॥ दशायाम् ॥ तरन्त्यनया । तॄ । अचइः । कृदिकारादिति ङीष् ॥ पचादौतरडितिपाठात् ङीष् वा ॥

तरी । स्त्री । नावि ॥ तरन्त्यनया । तॄ० । अवितॄस्तृतन्त्रिभ्यई ॥

तरीष । पु । स्वर्गे ॥ महोदधौ ॥ शोभनाकारे ॥ भेले ॥ व्यवसाये ॥ समर्थे ॥ वोधे ॥ तरन्ति येन । तॄ० । कॄतॄभ्यामीषन् ॥

तरीषी । स्त्री । शक्रकन्यायाम् ॥

तरु । पु । अगमे । द्रुमे ॥ तरन्ति नरकमनेन रोपका । तॄ० । भृमृशीतॄचरीति उप्रत्यय ॥

तरुकुणि । पु । पक्षिविशेषे । वाग्गुदे । वागुड इतिभाषा ॥

तरुखण्ड । पु । तरूणां समूहे ॥ षण्डादिभ्य खण्ड ॥

तरुजीवनम् । न । द्रुममूले ॥

तरुण । पु । एरण्डे ॥ स्थूलजीरके ॥ न । कुब्जपुष्पे ॥ त्रि । यूनि । जाततारुण्ये ॥ नूतने ॥ तरति । तॄ० । चोरश्च लोपेश्चुनन् ॥

तरुणज्वर । पु । सप्ताहावधिज्वरे ॥ यथा । आसप्तरात्रं तरुणं ज्वरमाहुर्मनीषिणः ॥

तरुणदधि । न । पञ्चदिनातीतदधिनि ॥

तरुणी । स्त्री । युवत्याम् । द्वितीयवयःप्राप्तायां नार्याम् ॥ आषोडशाद्भवेद्बाला तरुणी त्रिंशता मतेत्युक्तम् ॥ तरति । तॄ० । चोरश्चलोपश्चुनन् । वयसि चरमे इति ङीप् । नञ्लक्षीकमिति वा ॥ गौरादिङीष् वा । स्वरे विशेष ॥ घृतकुमार्याम् । सहायाम् । दन्तीवृक्षे ॥ चीडानामगन्धद्रव्ये ॥ सेवती इतिभाषाप्रसिद्धे पुष्पे । सहायाम् । गन्धाढ्यायाम् ॥

तरुणीकटाक्षमाल । पु । तिलकवृक्षे ॥

तरुतूलिका । स्त्री । } तरुदूलिका । स्त्री । } बादुड्याम् । बादुड पक्षी इति भाषा ॥

तरुनख । पु । कण्टके ॥

तरुभुक् । पुं । वन्दाके ॥

तरुमृग । पु । वानरे ॥

तरुराग । पुं । नवीनपल्लवे । किसलये ॥

तरुराज । पुं । तालद्रुमे ॥

तरुरुहा । स्त्री । } तरुरोहिणी । स्त्री । } वन्दाके ॥

तरुवल्ली । स्त्री । जतुकालतायाम् ॥

तरुविलासिनी । स्त्री । नवमल्लिकायाम् । सप्तलालतायाम् ॥ तरोर्विलासिनी ॥

तरुशायी । पु । खगे । पक्षिणि ॥

तरुसार । पु । कर्पूरे ॥ इतिशब्दावली ॥

तरुस्था । स्त्री । वन्दाके ॥

तरूट । पु । उत्पलकन्दे ॥

तर्क । पु । काङ्क्षायाम् ॥ वितर्के । व्यभिचारशङ्कानिवर्तके ॥ सचपञ्चविधः । यथा । आत्माश्रय १ । अन्योन्याश्रय २ । चक्रक ३ । अनवस्था ४ । प्रमाणबाधितार्थक ५ इति ॥ ऊहे । अविज्ञाततत्त्वेर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थं ऊहे ॥ अनुमाने ॥ व्याप्यारोपेण व्यापकारोपे । व्याप्यारोपात् व्यापकप्रसञ्जने । यथा । वह्निर्नस्यात् तर्हि धूमोपि न स्यात् ॥ मीमांसादितर्कशास्त्रे । आगमाविरोधिन्यायेन आगमार्थपरीक्षणे । विचारे ॥ बुद्धिसाध्ये । स्वबुद्ध्युद्भावे ॥ हेतुदृष्टान्तात्मनि ॥ तर्कणम् ।

तर्कभावार्थश्चुरादौ पटपुटेतिदण्डके पठित । भावेघञ् ॥ तर्कोऽर्थवाद इति कर्कोपाध्याय । यथा । अक्ता शर्करा उपदधातीतिविधि श्रूयते । तत्राञ्जनसाधन घृत तैलं वा तन्मध्ये केनाक्ता इतिसंशये तेजो-वै घृतमित्यर्थवादात् घृतेनाक्ता इतिनिर्णीयते। अतस्तर्को ऽर्थवाद' ॥ तर्कोमीमांसेति कल्पतरुकार ॥*॥ अचिन्त्या खलुयेभावा न तांस्तर्केण योजयेत् । नाऽप्रतिष्ठिततर्केण गम्भीरार्थस्यनिश्चय ॥

तर्कक । पु । याचके ॥ तर्ककारके ॥

तर्कयन् । त्रि । उत्प्रेक्षमाणे ॥

तर्कविद्या । स्त्री । आन्वीक्षिक्याम् ॥ तर्कस्य न्यायस्य विद्या ॥ तथाहि । चतुर्विधेभ्य पृथिव्यादिपरमाणुभ्योविश्वमुत्पद्यते त एवोपादानभूता नान्यत् । निमित्तकारणमीश्च कर्तृत्वात् कुलालवदिति तर्कविद्यायां प्रमेयम् ॥*॥ अहोदुर्मतय. सर्वा पुरुषस्य निरूपणे। तर्कविद्या न जानन्ति अमेय पुरुषोत्तमम् ॥ अमेयम् अभिन्ननिमित्तोपादानत्वात् । यतएतदपि न जानन्ति सर्वं प्रमेयजात घटादिवत् कार्यमिति परमाणूपादानकारणमप्यपेक्षणीयमेवेति । परमाणूनां



प्रमेयत्वहेतुना कार्यत्वसिद्धौ तदुपादानमपेक्षणीयम् । एव तत्तदपेक्ष्यमनवस्था स्यात् । अतोऽप्रमेयः परमात्मैवोपादान नान्यदन्यकल्पितम् अनपेक्षणात् । तथाहि । अम्भ शीतकराम्भ(?)नगरस्वप्नेन्द्रजाला-दिवत कार्यं मेय मसत्यमेत दुद यव्यस्तादियुक्त जगत् । शुक्तौ रूप्यमिव स्रजी भुजग स्वात्मावबोधे हरा वज्ञाते प्रभवत्यथास्तमयते तत्त्वावबोधोदयादिति प्रबोधचन्द्रोदय ॥

तर्कारी । स्त्री । जयाद्रुमे । अरणी इतिभाषा । जाड़ी इतिकश्चित् । तर्कमृच्छति । ऋगतौ । कर्मण्यण् । ङीप् । गौरादित्वान् ङीष्वा ॥

तर्कारि । पु । } द्रुमे ॥ इतिरत्न
तर्कील । पु । } माला ॥

तर्की । त्रि । तर्कविशिष्टे । मीमांसके ॥ यथा । त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठक । त्रयश्चाश्रमिण पूर्वे परिषत् स्याद्दशावरेतिमनु ॥

तर्कु । पु । कर्पासनालिकायाम् । तर्कुण्याम् ॥ कृत्यतेनेन । कृतीवेष्टने । कृतेराद्यन्तविपर्ययश्चेत्यु । ककारतकारयोर्विनिमय । तकुआ इति भाषा ॥

तर्कुटम् । न । कर्त्तने । कातना इति भाषा ॥ इतित्रिकाण्डशेष. ॥

तर्कुटी । स्त्री । तर्कौ ॥ इतिशारावली ॥

तर्कुपिण्ड । पु । तर्कुस्थितमृत्पिण्डे । वर्त्तुलायाम् ॥ इतिशारावली ॥

तर्कुपीठी । स्त्री । तर्कुपिण्डे ॥ इति शारावली ॥

तर्कुलासक । पु तर्कुभ्रमणयन्त्रे । जलोले । चरखा इतिभाषा ॥ इ०शा० ॥

तर्कुशाण । पु । तर्कुघर्षणपाषाणे । जामरे । सामके ॥ इतित्रिकाण्डशेष' ॥

तर्चु । पु । तरक्षुके ॥ इतिशब्० ॥

तर्क्ष्य । पु । यवक्षारे ॥

तर्ज्जनम् । न । भर्त्सने ॥ भयजनने ॥ तर्ज्ज० । ल्युट् ॥

तर्ज्जनी । स्त्री । प्रदेशिन्याम् । अङ्गुष्ठनिकटाङ्गुलौ ॥ तर्ज्यते ऽनया । तर्जभर्त्सने । करणे ल्युट् ॥

तर्ज्जिक । पु । देशविशेषे । तायिके ॥

तर्ज्जित । त्रि । भर्त्सिते ॥ तर्ज्यतेस्म । तर्जभर्त्सने । क्त ॥

तर्ण । पु । वत्से ॥ तृणोति तर्णोति वा । तृणु अदने । अच् ॥

तर्णक । पु । गोपुत्रे । वत्से । वच्छा इतिभाषा ॥ सद्योजातस्तु तर्णक ॥ तृणोति तर्णोतिवा । तृणु० । ण्वुल् ॥

तर्णि । पु । सूर्ये ॥ प्लवे ॥ इतिशब्दा० ॥

तर्त्तरीकम् । न । वहित्रे । पोते । जहाज इतियवनभाषा ॥ त्रि । पारगे ॥

तर्द । त्रि । हिंसके ॥ तर्दहिंसायाम् । अच् ॥

तर्दू । पु । दारुनिर्मितदर्व्याम् । दारुहस्तके । डोइ इतिभाषा ॥ जलतरणोपकरणे ॥ तरति० । तृ० । चोदुट्चेत्यूदुंडागमश्च ॥ तर्दति । तृणत्ति वा । तर्द० । उतृदिर्हिंसानादरयोर्वा । बाहुलकात् ऊ ॥

तर्पणम् । न । तृप्तौ ॥ प्रीणने ॥ यज्ञकाष्ठे ॥ महायज्ञविशेषे । पितृयज्ञे । पितृदेश्याम्बुदाने । पितृणां कव्यवालादीनाञ्च विधिना जलान्नदाने न तृप्तिसम्पादने ॥ तद्विविधम् । प्रधानमङ्गञ्च ॥ तत्राद्य यथा । तर्पणञ्च शुचि कुर्यात् प्रत्यहं स्नातको द्विज । देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम् ॥ विधवामधिकृत्य । तर्पणं प्रत्यहं कार्यं भर्त्तु कुशतिलोदकै । तत्पितु स्तत्पितुश्चापिनामगोत्रादिपूर्वकमिति ॥ * ॥ द्वितीय यथा । नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते । तर्पणन्तु भवेत्तस्य अङ्गत्वेन व्यवस्थितम् ॥ तर्पणाकरणे दोषोयथा । नास्ति

क्षभावा यस्यापि न तर्पयति वैसु त'। पिबन्ति लेहनि.स्नात्र पितरो वै जलाथिन इति ॥ जीवत्पितृकस्य तन्निषेधो यथा। दर्शस्नानगयाश्राद्ध तिलैस्तर्पण मेव च। न जीवत् पितृको भूप कुर्यात् कृत्वाघमाप्नुयादिति॥ तृप्तप्रीणने।भावेल्युट्॥

तर्पणी। स्त्री। गुरुस्कन्धद्रुमे॥

तर्पणेच्छु। पु। भीष्म॥ त्रि। तर्पणाकाङ्क्षे॥

तर्पिणी। स्त्री। चारव्याम्। पद्मचारिण्यामोषधौ॥

तर्म्म। न। यूपाग्रे॥ तरति। तॄ॰ सर्वधातुभ्योमनिन्॥

तर्हट। पु। वत्सरे॥ चक्रमर्दे॥

तर्ष। पु। लिप्सायाम्॥ उदन्यायाम्॥ भेलके॥ तर्षणम्। ञि तृषपिपासायाम्। घञ्॥ तरन्त्यनेन। तॄ॰ वृतृवदी तसो॥

तर्षणम्। न। तृषि। पिपासायाम्॥ ञितृष॰। ल्युट्॥

तर्षित। त्रि। सतृष्णे। तृषिते। तिसाया इति भाषा॥

तर्हि। अ। विशेषे॥ तदार्थे॥ तस्मिन्काले। अनद्यतनेर्हिलन्यतरस्याम्॥

तल। पु। तालमहीरुहे॥ चपेटे॥ त्सरौ॥ सव्येन पाणिना तन्त्रीघाते॥ आधारे॥ स्वभावे॥ पु। न। अधोभागे। अनूर्द्धे। तलेइतिनीचे इतिच भाषा॥ स्वरूपे॥ यथा। महीतलम्॥ न। काने। वने॥ कार्यबीजे॥ आलवाले। गर्त्ते॥ पादतलस्यमध्ये॥ स्त्री। न।। ज्याघातवारणे॥ तलति। तलप्रतिष्ठायाम्। पचाद्यच्॥

तलकम्। न। पुष्करिण्याम्। तलाव इतिहिंदू भाषा॥ इतिहारावली॥

तलप्रहार। पु। चपेटे। चर्वणि। तलाघाते॥

तलसरकम। न। अश्वस्य वक्षस्थलबन्धनरज्जौ। वक्रपट्टे। तङ्गइतिभाषा॥

तलहृदयम्। न। पादतलस्यमध्ये॥

तला। स्त्री। गोधायाम्। ज्याघातवारणे॥

तलाची। स्त्री। नलनिर्मितेकटे॥

तलातलम्। न। अतलादिषु पञ्चमेऽधोभुवने॥

तलिका। स्त्री। वक्रपट्टे। तलसारके॥

तलित्। स्त्री। विद्युति। तडिति॥ डलयोरैकत्वस्मरणात्वर्णविपर्यय॥

तलित। त्रि। आज्यादिभ्रष्टमांसादौ॥

तलितमांसम्। न। पक्वमांसप्रभेदे। भृष्टमांसे॥ यथा। मुद्गमांसविधाने न मांस सम्यक् प्रसाधितम्। पुनस्तदाज्ये सम्भृष्ट तलित प्रोच्यते बु-

थे ॥ तलितं बलमेधाग्निमांसौज शुक्रदृद्धिकृत् । तर्पणंलघुसुस्निग्ध रो चनद्दृढताकरम् ॥

तलिन । त्रि । विरले ॥ स्तोके ॥ स्वच्छे ॥ दुर्बले ॥ न । शय्यायाम् ॥ तलति तल्यते वा । तल० । तलि पुलिभ्यामिनन् ॥

तलिमम । न । कुट्टिमे ॥ तल्पे ॥ चन्द्रहासे ॥ विताने ॥

तलुन । पु । पवने ॥ यूनि ॥ तरति । तृ० । त्नोरश्चलोवे न्युनन् ॥

तलुनी । स्त्री । युवत्याम् । तरुण्याम् ॥ वयस्यचरम इति नन्नन्तिति दा ङीप् । गौ० ङीष् वा ॥

तलेक्षण । पु । शूकरे ॥ इतिशब्दा० ॥

तलोदरी । स्त्री । भार्यायाम् ॥

तलोदा । स्त्री । नद्याम् ॥

तल्कम् । न । वने ॥ इतित्रिकाण्ड शेष ॥

तल्पम । न । अट्टे ॥ कलत्रे । दारेषु ॥ शय्यायाम् ॥ तल्यतेऽस्मिन् । तल० । खष्पशिल्पशष्पेतिसाधु ॥

तल्पकीट । पु । मत्कुणे ॥

तल्पनम् । न । करिपृष्ठे ॥ पृष्ठवंशस्य मांसे ॥

तल्ल । पु । जलाधारविशेषे । तलाव इति हिन्दूभाषा ॥ न । विले । जल

वासे ॥ त्रि । तस्मिन् क्षीने ॥

तल्लज । पु । मतल्लिकायाम् । प्रशस्ते ॥ लजति । लजक । न्तौ । पचाद्यच् । तदल्लज । अयमजहल्लिङ्ग समासे उत्तरपदे भवति । यथा । प्रशस्ताकुमारी कुमारीतल्लज । तल्लजस्य रूढिशब्दत्वात प्रशसावचनैश्चेतिसमास ॥

तल्लिका । स्त्री । कुञ्चिकायाम् । कूर्चिकायाम् । कूची ताली इत्यादि भाषा ॥

तल्ली । स्त्री । तरुण्याम् ॥

तवक्षीरम् । न । पय क्षीरे । यवजे । तीखुर इतिभाषा ॥ तवक्षीरन्तुमधुरं शिशिरं दाहपित्तहृत । क्षयकास कफश्वासास्रदोषं हन्तिचसेवनात् ॥

तवक्षीरी । स्त्री । गन्धपत्रायाम् ॥

तवराज । पु । यवासशर्करायाम् ॥

तवराजोद्भवखण्ड । पुं । यवासशर्करा भवखण्डे । सिद्धमोदके ॥

तवर्ग । पु । तादिपञ्चवर्णेषु ॥

तवर्गीय । पु । तवर्गभवेवर्णे ॥ वर्गान्ताच्चेति ठक् ॥

तविष । पुं । स्वर्गे ॥ महोदधौ ॥ तवेतिसौत्रोधातु । तवेर्णिद्वेतिटिषच् ॥ सुवर्णे ॥ शोभनाकृतौ ॥ व्यवसाये ॥ भेले ॥

तविषी । स्त्री । शक्रकन्यायाम् ॥ धरित्र्याम् ॥ नद्याम् ॥ वैदिकनिघण्टौ तु बलेपि ॥ टित्वात् ङीप् ॥

तष्ट' । त्रि । तनूकृते ॥ तक्ष्यते स्म । तक्षू० । क्त' । स्तोरितिकलोपेष्टुत्वम् ॥

तष्टि. । स्त्री । काष्ठतक्षणे ॥

तसर' । पु । वस्त्रजात्यन्तरे । टसर इति भाषा ॥ सूत्रवेष्टने । तासनी इति गौडभाषाप्रसिद्धे तन्तुवायोपकरणे ॥ तनोति । तनु० । तनूपृषिभ्यांक्सरन् । अनुदात्तोपदेशेत्यादिनानुनासिकलोपः ॥

तस्कर । पु । चोरे ॥ द्विविधांस्तस्करान् विद्यात् परद्रव्यापहारकान् । प्रकाशांश्च प्रकाशांश्च चारचक्षुर्महीपति ॥ प्रकाशवञ्चका स्तेषां नानापण्योपजीविन । प्रच्छन्नवञ्चका स्त्वेते येस्तेनाटविकादय ॥ तत्करोति । दिवाविभेत्यत्र कियत्तद्बहुष्विषच्च ॥ सद्गृहतौ करपत्यौ रितिसुट् दलोपौ ॥ दमनवृक्षे ॥ पृक्काशाके ॥

तस्करस्नायु । पु । काकनासालतायाम् ॥

तस्करी । स्त्री । कोपनायां नार्याम् ॥

तस्थिवान् । त्रि । स्थितिमति । स्थिते ॥ ष्ठा० । छन्दसिलिट् । द्विस्वादिकार्यम् । लिट' कानजादेश. ॥ क्वसुश्चेतिक्वसुप्रत्ययो वा ॥

तस्थू । पु । स्थावरे ॥

ताच्छील्यम् । न । नियततत्स्वभावतायाम् ॥ भावेष्यञ् ॥

ताटङ्क' । पु । तालपत्रे । कर्णिकायाम् । ताडङ्के ॥ गुर्वर्थरे ऽ ॥

ताटस्थ्यम् । न । उदासीनत्वे ॥ निकटस्थत्वे ॥

ताड । पुं । ताडने ॥ घोषे । शब्दे ॥ मुष्टिमेयतृणादिषु ॥ अद्रौ ॥

ताडका । स्त्री । राक्षसीविशेषे ॥

ताडकान्तक । पु । श्रीरामे ॥

ताडकाफलम् । न । वृहदेलायाम् ॥

ताडकेय । पु । मारीचराक्षसे ॥ ताडकाया अपत्यम् । स्त्रीभ्योढक् ॥

ताडङ्क । पु । कर्णभूषायाम् । कर्णदर्पणे । कानतडका इतिभाषा ॥

ताडनम् । न । आघाते ॥ यथा । शतापराधे वनितां पुष्पेणापि न ताडयेत् । दोषान्न गणयेत् स्त्रीणां गुणानेव प्रकाशयेदितिमान्त्रिका' ॥ लालने बहवोदोषा स्ताडने बहवोगुणा । तस्मात् पुत्रञ्च शिष्यञ्च ताडयेन्नतु लालयेत् ॥

ताडनी । स्त्री । अश्वताडनयष्ट्याम् । कशायाम् ॥ ताड्यते ऽ नया । तड आघाते । णिच्. । ल्युट् । ङीप् ॥

ताडपत्रम् । न । ताडङ्के ॥

ताडागम् । न । तडागोदके ॥ यथा । प्रशस्तभूमिभागस्थो बहुसंवत्सरोषित । जलाशय स्तडाग. स्यात्ताडागं तज्जलं स्मृतम् ॥ ताडागमुदकं स्वादु कषायं कटुपाकि च । वातलं बद्धविण्मूत्र मसृक्पित्तकफापहम् ॥ तडागस्येदम् । अण् ॥

ताडिः । स्त्री । ताडीद्रुमे । ताडियाल इतिगौड भाषाप्रसिद्धे ॥

ताडी । स्त्री । पत्रद्रुमे । ताडियाल- इति गौडभाषा ॥ आभरण विशेष इतिदुर्गसिंह. ॥

ताड्यमान. । त्रि । पटहादिवाद्ये ॥ त्रि । तत्कालताडिते । हन्यमाने । ताडनयुक्ते ॥

ताण्ड । पुं । मुन्यन्तरे ॥

ताण्डव । पु । न । लास्ये । नृत्ये ॥ पुन्नृत्य ताण्डवंप्राहु स्त्रीनृत्य लास्य मुच्यते ॥ तण्डुना प्रोक्तम् । तेनप्रोक्तमित्यण् ॥ तृणान्तरे ॥ उद्धतनृत्ये ॥ चित्रधुनि (॥।) ॥

ताण्डवतालिक । पु । नन्दिनि । शिवद्वारिस्थि ॥

ताण्डवप्रिय. । पुं । शिवे ॥ त्रि । नृत्यप्रिये ॥ ताण्डव प्रियं यस्य ॥

ताण्डवितम् । न । नर्त्तिते ॥

ताण्डि । न । नृत्यशास्त्रे ॥

ताण्डी । पु । साम. शाखाविशेषा ऽध्यायिनि ॥

तात. । पु । जनके । पितरि ॥ अनुकम्प्ये ॥ त्रि । पूज्ये ॥ चतुष्कले (ऽ॥) आदिगुरौ ॥ तनोति । तनु° । दुतनिभ्यांदीर्घश्चेति क्त. । अनुदात्तेति नलोप ॥

तातगु । पु । पितृताते । काका चाचा इतिभाषा ॥ त्रि । जनकस्यपिते ॥

तातजनयित्र्यौ । स्त्री । मातापित्रो. ॥ द्विवचनान्तोयम् ॥

ततुल्य । त्रि । पितृसमे । मनोजवे ॥ तातेन तुल्य ॥

तातन । पु । खञ्जने ॥

तातल. । पु । व्याधि । रोगे ॥ पाके ॥ लोहकूटे ॥ मनोजवे । ततलुल्ये ॥ त्रि । तप्तमाषे ॥

ताति । पु । पुत्रे ॥ इतिजटाधरः ॥

तात्कालिक । पुं । तत्कालभवे ॥

तात्कालिकविकार. । पु । विश्वासाख्ये भावे ॥ तात्कालिकविकार स्वादि भावो ऽङ्गक्रियादिषु ॥

तात्पर्यम् । न । तत्परतायाम् ॥ वक्तुरिच्छायाम् ॥ अभिप्राये ॥ तत्परस्य भावः । ष्यञ् ॥

तादर्थ्यम् । न । तदर्थत्वे । तस्मैइदम्

तदर्थम् । तस्य भाव । ब्राह्मणादि-त्वात् ष्यञ् ॥

तादात्म्यम् । न । तत्स्वरूपे ॥ अभेद सम्बन्धे ॥ तस्य आत्मा तदात्मा । त दात्मनो भाव । ब्रा० ष्यञ् ॥

तादृक्ष: । त्रि । तादृशि ॥ सइवदृश्यते । तमिव पश्यति वा । दृशिर् प्रेक्षणे । त्यदादिष्विच्छन्दसि कोपिवाच्य इति क्स. । आसर्वनाम्न. इत्यत्र दृग्दृशवतुषु इति वार्त्तिकेनात्वम्

तादृक् ग् । त्रि । तथाविधे । उपमान गोचरे । तादृशे ॥ तमिवेमपश्यन्ति सइवायं पश्यति दृश्यते वा । त्यदादि षु दृशऽनालोचने कञ्च इति क्विन् । आसर्वनाम्न इत्या त्वम् । क्विन्प्रत्ययस्य कु । क्विन्नन्तत्वात् कु त्वेनग । चर्त्वमवसाने वा. ॥

तादृश । पु । तादृशि ॥ सइवदृश्यते तमिवपश्यतिवा । त्यदादिर्ष्वित कञ् ॥

तान. । पु । गानाङ्गविशेषे ॥ यथा । वि स्तार्यन्ते प्रयोगा ये मूर्च्छनाशेषसं श्रया । तानास्तेप्यूनपञ्चाशत् सप्त स्वरसमुद्भवा ॥ तेभ्य एव भवन्त्यन्ये कूटताना पृथक् पृथक् । तत्संख्या मष्टसाहस्र चयस्त्रिंशच्छतानिच ॥ न । विस्तारे ॥ ज्ञानविशेषे ॥

तानवम् । न । तनुत्वे ॥ माघेतनुता याम् ॥ यथा । तानवं तनुतामाघे दैर्घ्यमल्यभ्रमणादिकृत् ॥ तनेर्भाव । इगन्ताच्चेत्यण् ॥

तानूर । पुं । आवर्त्ते । पयसाम्भ्रमे ॥

तान्त । त्रि । म्लाने ॥ क्लान्त । श्रान्ते ॥

तान्तव. । त्रि । प्रावरणान्तरे ॥ तन्तूना विकार । चोरण् ॥

तान्त्रिक । त्रि । ज्ञातसिद्धान्ते । शास्त्र तत्त्वज्ञे । मन्त्रशास्त्रादिनि कौलिके । य थानरेषु तन्त्रज्ञा. सरितां जाह्नवी यथा । यथाऽऽश्रमिदिवेशाना मागमा नामिदन्तथा ॥ तन्त्रं सिद्धान्तमधीते वेदवा । उक्थादित्वाट्ठक् ॥ त त्रातस्मनिभिनि ॥

ताम्बूरम् । न । मांसव्यञ्जनप्रभेदे ॥ यथा । अङ्गारपूर्णगर्त्ते वद्धस्य म धरम्भितम् । सस्नात पिहित मांस मर्त्ताम्बूर मुच्यते ॥ सुस्वादुताम्बूर म् । पचेत्संस्कारीवत्सं खण्डिसम्भा रसम्भृतम् । चतुर्दिक्षु गड्डाकारे पार्श्वप्रज्वलितानले । विपक्व सुरभि स्वादु ताम्बूरमिति कीर्त्तितम् ॥ अ न्यच्च । कोद्रिकाया सुसम्भार मस- न्न मवलम्बितम् । मांसं पिधाय वा ष्पाग्निना यास्वेदित वरम् ॥ ता म्बूर कथितं मल्प मृदु पथ्यतम मृ तम् । तथोक्त नव सूक्ष्म मन्यथा

दोषनारकमिति ॥

ताप । पु । सन्तापे ॥ कृच्छ्रे ॥ तपनम् । तपसन्तापे । घञ् ॥

तापक । पुं । ज्वरे ॥ त्रि । तापकृति ॥ तापयति । तप० । ण्वुल् ॥

तापत्य । पु । अर्जुने ॥ इति पु० ॥

तापत्रयम् । न । आध्यात्मिकाधिभौतिकाधिदैविकदुःखत्रये ॥ आध्यात्मिकादिमैत्रेय ज्ञात्वा तापत्रयं बुधः । उत्पन्नज्ञानवैराग्यःप्राप्नोत्यात्यन्तिकं फलम् ॥ तापानां त्रयम् ॥

तापन । पु । सूर्ये ॥ कामबाणे ॥ असुरविशेषे ॥ सूर्यकान्तमणौ । त्रि । तापके । तापयितरि ॥ तापयति । तप० । कर्त्तरि ल्युः ॥

तापनीय । पुं । निष्कपरिमिते सुवर्णे ॥ तपनीयस्य विकारःपरिमाणः । जातरूपेभ्य.परिमाण इत्यण् ॥

तापस । पु । दमनकवृक्षे ॥ बकपक्षिणि ॥ न । तमालपत्रे । तेजपात इतिभाषा ॥ त्रि । तपस्विनि ॥ वानप्रस्थे ॥ तपोऽस्यास्ति । अण्चेत्यण् ॥ यद्वा । तप शीलमस्य । छत्रादिभ्योण ॥

तापसतरु । पु । } इङ्गुदीवृक्षे । इं
तापसद्रुम । पु । } गुआ इतिभाषा
॥ तापसोपयुक्तस्तरु ॥

तापसद्रुमसन्निभा । स्त्री । गर्भदात्री



क्षुपे ॥

तापसप्रिय । पुं । पियालद्रुमे ॥

तापसप्रिया । स्त्री । द्राक्षायाम् ॥

तापसेष्ट । पु । पियाले । चारे ॥

तापहरी । स्त्री । ताहरी इति प्रसिद्धे व्यञ्जनपदार्थे ॥ यथा । घृते हरिद्रासंयुक्ते माषाणां भर्जयेद्वटीः । तण्डुलांश्चाऽपि निर्द्धौतान् सह्नैवपरिभर्जयेत् ॥ सिद्धियोग्यं जलं तत्रक्षिप्य कुशलः पचेत् । लवणार्द्रकखिण्डानि मात्रया तत्र निःक्षिपेत् ॥ एषासिद्धि समायाता प्रोक्ता तापहरीबुधैः ॥ भवेत्तापहरीवल्या वृष्या श्लेष्मासमाचरेत् । इत्थीतपैत्तीक्ष्यागुर्वी तत्र गुणाःस्मृताः ॥

तापिञ्छ । पु । तमालवृक्षे ॥ तापिनछादयति । छद० । कर्मण्यण् । पृषोदरादिः ॥ न । तमालपुष्पे ॥ तापिञ्छस्यपुष्पम् । फलेलुगितितद्धितलुक् । लिङ्गेन प्रसवे सर्वमिति क्लीवता ॥

तापिञ्जम् । न । धातुमाक्षिके ॥ इति राजनिर्घण्टः ॥

तापित । त्रि । पीडिते ॥ जातसन्तापे ॥ तपणया इति भाषा ॥ तापःसञ्जातोस्य । ता० इतच् ॥

तापी । पुं । बुद्धे ॥ त्रि । तापवति ॥

तामेोस्या ऽस्ति । अतइनिठमावितीनि ॥

तापी । स्त्री । विन्ध्याद्रिप्रसिद्धायां पश्चिमवाहिन्यां सरिति ॥ यमुनायाम् ॥

तापोजम् । न । स्वर्णमाक्षिके ॥

ताप्यः । पु । न । धातुमाक्षिके ॥

ताप्यकम् । न । माक्षिके ॥

ताभ्रः । पु । भीषणे ॥ दोषे ॥

तामरम् । न । जले ॥ घृते ॥इ० चद्र ॥

तामरसम् । न । पद्मे ॥ ताम्रे ॥ काञ्चने ॥ तामरे जले सरति । घसस्वप्ने । अन्येभ्योपीतिड. ॥ यद्वा । तम्यते । तमु० । घञ् । नोदात्तोपदेशस्येतिनिषेधस्यानित्यत्वान्न वृद्धि निषेध' । रस्यते । रसआस्वादे । चु० । अदन्त । एरच् । तामञ्चतद्रसञ्च ॥ जगतीछन्दप्रभेदे । यथा । इहवद तामरसं नजजाय ॥ स्फुटकुसमाकरन्दमनोज्ञं व्रजललनानयनालिनिपीतम् । तवमुखतामरसं मुरशत्रो हृदयतडागविकाशिममास्तु ॥

तामलकी । स्त्री । भूम्यामलक्याम् ॥ तामस्यासावामलकीच । पृषोदरादि ॥

तामलिप्तम् । न । } तमोलुकइति
तामलिप्ती । स्त्री । } प्रसिद्धे दामलिप्ते देशे । विष्णुगृहे ॥

तामस' । पु । भुजगे ॥ खले ॥ उलूके ॥ भूतावध्वकारे ॥ अधर्मोज्ञानावैराग्यानैश्वर्याभिधानेषु चतुर्षु बुद्धिधर्मेषु ॥ चतुर्थमनौ ॥ न । कृष्णधने ॥ यथा । पार्श्वकद्यूतचौर्यार्त्तिप्रतिरूपकसाहसै. । व्याजेनोपार्जित यत्तु तत् कृष्णं समुदाहृतम् ॥ पार्श्वक अपात्र सम्पापतया योर्जयति । आचार्योपदमीडया । प्रतिरूपकेण कृत्रिमरत्नादिना । साहसेन समुद्रयानगिर्यारोहणादिना । व्याजेनव्राह्मणवेशेनशूद्र..दना । कृष्ण ताम सम्ंज्ञि । तमसायुक्ते ॥ तमोवृत्तौ ॥

तामसकीलकः । पु । राहुसुतेषु केतुषु ॥ यथा । तामसकीलकसञ्ज्ञा राहुसुता केतव स्त्रयस्त्रिंशत् । वर्णस्थानाकारै स्तान् दृष्ट्वार्के फलं ब्रूयात् ॥ तेषार्कमण्डलगता पापफला श्चन्द्रमण्डले सौम्या । ध्वाङ्क्षकवन्धप्रहरणरूपा. पापा मशाङ्केऽपि ॥ तेषामुदये रूपाम्भ कलुषं रजोहत व्योम । नगतरुशिखरामर्द. सशर्करो वातिमारुतश्च. ॥ ऋतुविपरी तास्तरवो दीप्ता मृगपक्षिणोदिशोदाहा. । निर्घातमहीकम्पादयो भवन्त्यत्रचोत्पाता. ॥ अम्भ.कलुषादीनामुत्पातानां नि

ष्फलत्वमाह । न पृथक् फलानि- तेषां शिखिकीलकराहुदर्शनानि यदि । तदुदयकारणमेषां केत्वादीनां फलक्रमाद् ब्रूयात् ॥*॥ तामसकीलाना दर्शनवशात् फलमाह। यस्मिन् यस्मिन् देशे दर्शन माया न्ति सूर्यबिम्बस्था । तस्मिँस्तस्मिन् व्यसन महीपतीनां परिज्ञेयम् ॥ ॥ चुत्प्रम्लानशरीरा मुनयोप्युत्सृष्टधर्मसच्चरिता । निर्मांसबालहस्ता. कृच्छ्रेणायान्ति परदेशम् ॥ तस्करविलुप्तवित्त. प्रदीर्घनिःश्वास मुकुलितात्तिपुटा' । सन्त समग्रशरीरा' शोकोद्भववाष्परुद्धदृश ॥ चामा जुगुप्समाना स्वनृपतिपरचक्रपीडिता मनुजा । स्वनृपतिचरितकर्मच पुराकृत प्राप्नुवन्त्यन्ये ॥ गर्भेष्व पिनिष्पन्ना वारिमुचो न प्रभूतवारिमुच । सरितो यान्ति तनुत्व क्वचित् क्वचिज्जायते सस्यम् ॥*॥ तेषामाकृतिवशेनफलमाह । दण्डेनरेन्द्रमृत्यु र्व्याधिभय स्यात्कवन्धसस्थाने । ध्वाङ्क्षेचतस्करभय दुर्भिक्ष कीलकेऽर्कस्थे ॥ राजोपकरणरूपै स्छत्रध्वजचामरादिभिर्विद्धः । राजान्यत्वकृदर्क. स्फुलिङ्गधूमादिभिर्जनहा ॥ एकोदुर्भिक्षकरो द्व्याद्या.स्युर्नरपतेर्वि नाशाय । सितरक्तपीतकृष्णैस्तैर्विद्धोऽर्कोनुवर्णघ्न' ॥*॥ विशेषफलान्याह । दृश्यन्तेच यत स्तेरविबिम्बस्योत्थितामसोत्पाताः । आगच्छति लोकानां तेनैवभयं प्रदेशेनेति वाराहीसंहिता ॥

तामसयज्ञ । पु । यज्ञविशेषे ॥ यथा । विधिहीन मसृष्टान्न मन्त्रहीन मदक्षिणम् । श्रद्धाविरहितं यज्ञं तामस परिचक्षते ॥ तामसानां यज्ञ. ॥

तामसाहारः । पु । तामसप्रकृतीनामाहारे ॥ यातयाम गतरस पूतिपर्युषितञ्चयत् । उच्छिष्ट मपिचामेध्य भोजनं तामसप्रियम् ॥

तामसिकः । त्रि । तामसे । तमोगुणकार्ये ॥

तामसी । स्त्री । निशायाम् ॥ दुर्गायाम् ॥ तमोन्वितायाम् ॥ जटामांस्याम् ॥

तामिस्र । पु । विपर्ययविशेषे ॥ सचाष्टादशधा । यथा । शब्दादयोदशविषया रञ्जनीया. स्वरूपत' । ऐश्वर्य ञ्चाणिमादिक नस्वरूतोरञ्जनीयम् । किन्तुरञ्जनीयशब्दाद्युपायः । ते चशब्दादय उपस्थिता. परेणोपहन्यमाना स्तदुपायाश्चाणिमादयः स्वरूपेणैव कोपनीया भवन्तीति श

ब्दादिभिर्दशभि सहाणिमाद्यष्टक-
मष्टादशेति। तद्विषयोद्वेषस्तामि
स्रो ऽष्टादशविषयत्वादष्टादशधेति
साङ्ख्या ॥ भोगेच्छाप्रतिघाते स
ति क्रोधे ॥ राक्षसे । तमिस्राचारि
णि ॥ न । अन्धकारमये नरके ॥ प
रवित्तापत्यकलत्रापहर्त्ता यमदूतै
र्यत्रनिपात्यते ॥ तमिस्र मस्मिन
स्त्याऽस्तिवा । ज्योत्स्ना तमिस्र-
न्यथा ॥

ताम्बूलम् । न । क्रमुके । गुवाके ॥ ना
गवल्लीदले । पानइति प्रसिद्ध ॥ ता
म्यति । तमु । पिञ्जादित्वात् ऊलच्
धातोर्वुक् दीर्घत्वञ्च ॥ ताम्बूल कटु
तिक्त मुष्णमधुर क्षार कषायान्वि
त वातघ्न कृमिनाशन कफहरं दुर्ग
न्धनिर्नाशनम् । वक्त्रस्याभरण विशु
द्धिकरण कामाग्निसन्दीपनं ताम्बूल
स्य सखे त्रयोदशगुणा स्वर्गेपिते दु
र्लभा ॥ अपिचाहु । ताम्बूल विश
द रुच्य तीक्ष्णोष्ण तुवर सरम् ।
वश्यतिक्त कटु क्षार रक्तपित्तकरं
लघु ॥ वल्यश्लेष्मास्यदौर्गन्ध्यमलवा
तश्रमापहम् ॥ * ॥ अनिधाय मु-
खेपर्णं पूग स्वादयते नर । मतिभ्र
शो दरिद्र. स्यादन्ते न स्मरते हरि
म ॥ * ॥ पर्णमूले वसेद्व्याधि पर्णा
ग्रे पापसञ्चय । चूर्णपर्णं हरेदायु
शिरावुद्धिविनाशिनी ॥ नायुरग्र वि
षमूले मध्य ऽलक्ष्मी र्व्यवस्थिता ।
तस्मादग्रञ्च मूलञ्च मध्य पर्णस्य वर्ज
येत् ॥ चूर्णाधिक हरतिगन्ध मथा-
धिपूग राग तथाधिकदलञ्च सुगन्धि
कारि । ताम्बूलमुत्तममिद रसना-
ग्रभिन्नपर्णनिशास्वधिकखण्डित पर्ण
मह्नि ॥ ताम्बूल न हित प्रोक्त शरी
रे रूक्षदुर्वले । ज्वरास्यशोषपित्ता
स्रमदमूर्च्छाक्षिरोगिषु ॥ ताम्बूला
त्युपयोगात् स्याच्छोष पित्तानिला
स्रता । देहदृक्केशदन्ताग्निश्रोत्रव
र्णबलक्षय. ॥ * ॥ विना पर्णं मुखे
दत्त्वा गुवाक भक्षये यदि । ताव द्भ
वति चण्डालो यावद्गङ्गा नगच्छति
॥ * ॥ ताम्बूल विधवास्त्रीणा यती
नां ब्रह्मचारिणाम् । तपस्विनाञ्च वि
प्रेन्द्रगोमाससदृश ध्रुवम् ॥ इति ब्र
ह्मवैवर्त्तपुराणम् ॥

ताम्बूलकरङ्क । पु । पानवट्टा इतिप्रसि
द्धे ताम्बूलपात्रे । स्यग्याम् ॥

ताम्बूलद. । त्रि । वाग्गुलिके । ताम्बूल
दातरि॥ इतित्रिकाण्डशेष. ॥ ताम्बूल
ददाति । डुदाञ् । आतइतिक. ॥

ताम्बूलपत्र । पु । पिण्डालौ ॥

ताम्बूलराग. । पु । मसूरे ॥ ताम्बूल

रक्ते ॥

ताम्बूलवल्लिका । स्त्री । ताम्बूल्याम् ॥

ताम्बूलवल्ली । स्त्री । ताम्बूल्याम् ॥ ताम्यति । तमु० । क्विप् । अनुनासिकस्येतिदीर्घः । वेल्लति । वुवमज्जने । चुरादीनांणि ल्वा । इगुपधेतिक. । ताम् चासौवुलश्च । पृषोदरादि. । ताम्बूलाख्यावल्ली । शाकपार्थिवादिः ॥

ताम्बूलिक । पुं । ताम्बूलिनि ॥

ताम्बूली । चि । रात्रौ ताम्बूलाधिकृते । तंबोली इति प्रसिद्धे जात्यन्तरे ॥

ताम्बूली । स्त्री । ताम्बूलवल्ल्याम् ॥ ताम्बूलात् गौरादित्वात् ङीष् ॥

ताम्रम् । न । तावाँ इतिप्रसिद्धे तैजसधातुविशेषे । शुल्वे । म्लेच्छमुखे । नैपालिके ॥ अस्योत्पत्त्यादयो यथा । शुक्रं यत् कार्त्तिकेयस्य पतितं धरणीतले । तस्मात् ताम्रं समुत्पन्नमिदमाहुः पुराविद ॥ जपाकुसुमसङ्काशं स्निग्धं मृदुघनक्षमम् । लोहनागोज्झितं ताम्रं मारणाय प्रशस्यते ॥ कृष्णं रूक्षमतिस्तब्धं श्वेतञ्चापिघनासहम् । लोहनागयुतञ्चेति शुल्वं दुष्टं प्रकीर्त्तितम् ॥ ताम्रं कषाय मधुरं सतिक्तं मम्लञ्च पाके कटु सारकञ्च । पित्तापहं श्लेष्महरञ्च शीतं तद्रोपणं स्यात्लघु लेखनञ्च ॥ पाण्डूदराशीज्वरकुष्ठकासश्वासक्षयान् पीनसमम्लपित्तम् । शोथं कृमिं शूलमपाकरोति प्राहुः परे वृंहणमल्पमेतत् ॥ एकोदोषो विषं ताम्रेत्वसम्यङ्मारिते ऽष्टते । दाहः स्वेदोरुचिर्मूर्च्छा क्लेदोरेको वमिर्भ्रमः ॥ तस्यशोधनविधिर्यथा । पत्तलीकृतपत्राणि ताम्रस्याग्नौ प्रतापयेत् । निषिञ्चेत् तप्ततप्तानि तैले तक्रे च काञ्जिके ॥ गोमूत्रे च कुलत्थानां कषायेच त्रिधात्रिधा । एवं ताम्रस्य पत्राणां विशुद्धिः सम्प्रजायते ॥ तस्य मारणविधि र्यथा । सूक्ष्माणि ताम्रपत्राणि कृत्वा संस्वेदयेद्बुधः । वासरत्रयमम्लेन ततःखल्वे विनिः क्षिपेत् ॥ पादांशं सूतकं दत्वा याममम्लेनमर्दयेत् । तत उद्धृत्य पत्राणि लेपयेद् द्विगुणेनच ॥ गन्धकेनाम्लघृष्टेन तस्य कुर्याच्च गोलकम् । ततः पिष्ट्वाचमीनाक्षीं चाङ्गेरीं सपुनर्नवाम् ॥ तत्कल्केन वहिर्गोलं लेपयेद् द्व्यङ्गुलोन्मितम् । धृत्वातद्गोलकं भाण्डशरावेणावरोधयेत् ॥ वालुकाभिः प्रपूर्याथ विभूतिलवणाम्बुभिः । दत्त्वाभाण्डमुखेमुद्रांततस्तच्चुल्यां विपा

चयेत्॥ क्रमवृद्धाग्निना सम्यक् याव यामचतुष्टयम्। स्वाङ्गशीतं समुद्धृत्य मर्दयेच्छूरणद्रवे॥ यामैक गोलक तच्च निःक्षिपेच्छूरणोदरे। मृदालेपस्तु कर्त्तव्य सर्वतोऽङ्गुष्ठमात्रकः॥ पाच्यं गजपुटे चास मृतं भवति निश्चितम्। वमनञ्च विरेकञ्च भ्रम क्लममथारुचिम्॥ विदाह स्वेदमुत्क्लेदं न करोति कदाचनेति॥ अरुणे। शुल्वनिभे॥ पु। कुष्ठरोगप्रभेदे॥ त्रि। अरुणवर्णवति॥ ताम्यति तम्यतेवा। तमु०। अमितम्योर्दीर्घश्चेति रक्दीर्घौ॥

ताम्रकम्। न। ताम्रे॥ स्वार्थेकः॥

ताम्रकर्णी। स्त्री। अञ्जननामपश्चिमदिग्गजकरिण्याम्॥ ताम्रौ कर्णौ यस्याः। पाककर्णेति नासिकेति वा ङीष्॥

ताम्रकारः। पु। ताम्रकुट्टके। शौल्विके। कसेरा इति भाषा प्रसिद्धे वर्णसङ्करजातौ॥ उत्पत्ति कसकारे द्रष्टव्या। ताम्रं करोति। डुकृञ्०। कर्मण्यण्॥

ताम्रकुट्टकः। पु। कांस्यकारे॥ ताम्रं कुट्टयति। पु। कुट्टच्छेदे। कर्मण्यण्। स्वार्थेकः॥

ताम्रकूटः। तमाखु इति प्रसिद्धे क्षुपे॥ यथा। सविद्याकाष्ठकूटञ्च ताम्रकूटञ्च धुस्तुरम्। अहिफेनं खर्जुरसस्तारिकातरिता तथा॥ इत्यष्टौ सिद्धिद्रव्याणि यथा स्यूर्यौष्टक प्रिये इति कुलार्णवतन्त्रम्॥

ताम्रक्रिमिः। पु। इन्द्रगोपकीटे॥

ताम्रगर्भम्। न। तुत्थे॥

ताम्रचूडः। पु। कुक्कुटे॥ ताम्रा चूडाऽस्य॥ कुक्कुरद्रुमे॥

ताम्रत्रपुजम्। न। कांस्ये॥

ताम्रदुग्धा। स्त्री। गोरक्षदुग्धायाम्॥

ताम्रपट्टम्। न। ताम्रनिर्मितेलेखनपत्रे॥ यथा। दत्त्वा भूमिं निबन्धं वा कृत्वा लेख्यन्तु कारयेत्। आगामिभद्रनृपते परिज्ञानाय पार्थिव॥ पटे वा ताम्रपट्टे वा समुद्रोपरिचिह्नितमिति मिताक्षरा॥

ताम्रपत्रः। पु। जीवशाके॥ न। ताम्रनिर्मितपत्रे॥

ताम्रपर्णः। पु। भारतवर्षीयोपद्वीपे॥

ताम्रपर्णी। स्त्री। चोलदेशवर्त्तिन्यां सरिद्धारायाम्॥

ताम्रपल्लवः। पुं। अशोकतरौ॥

ताम्रपाकी। पु। गर्दभाण्डवृक्षे॥

ताम्रपादी। स्त्री। हंसपदाम्॥

ताम्रपुष्पः। पु। भूमिचम्पके। भूंचांपा इति भाषा॥ केविदारे। रक्तकाञ्चने॥

ताम्रपुष्पिका । स्त्री । जपाकुसुमे ॥ रक्तत्रिवृति ॥

ताम्रपुष्पी । स्त्री । धातक्याम् ॥ पाटलावृक्षे ॥ जपायाम् ॥

ताम्रफलः । पु । अङ्कोठवृक्षे ॥

ताम्रमूला । स्त्री । दुरालभायाम् ॥ लज्जालौ ॥ कच्छुरायाम् । खिराइ इतिगौडभाषा ॥

ताम्रवर्णः । पु । पक्षिपादवृक्षे ॥

ताम्रवर्णा । स्त्री । जवायाम् ॥

ताम्रवल्ली । स्त्री । चित्रकूटादिदेशप्रसिद्धायां ताम्रायां लतायाम् । ताल्याम । तमाल्याम् ॥ मञ्जिष्ठायाम् ॥

ताम्रबीजः । पुं । कुलत्थे ॥

ताम्रवृक्षः । पु । कुलत्थे ॥ रक्तचन्दने ॥

ताम्रवृन्तः । पुं । कुलत्थे ॥

ताम्रवृन्ता । स्त्री । कुलत्थिकायाम् ॥

ताम्रशिखी । पु । कुक्कुटे ॥

ताम्रसारम् । न । रक्तचन्दने ॥ इतिरत्नमाला ॥

ताम्रसारकम् । न । रक्तचन्दने ॥ पु । रक्तखदिरे ॥ इतिराजनिर्घण्टः ॥

ताम्रा । स्त्री । ताम्रवल्ल्याम् ॥ सैंहल्याम् ॥ ताम्रवर्णायाम् ॥

ताम्राकुः । पु । उपद्वीपभेदे ॥

ताम्राक्षः । पु । कोकिले ॥ ताम्रे अक्षिणी यस्य ॥ त्रि । ताम्रनयने ॥



ताम्राभम् । न । रक्तचन्दने ॥

ताम्राख्या । स्त्री । तीर्थविशेषे ॥

ताम्रार्द्धम् । न । कांस्ये ॥

ताम्राश्मा । पुं । पद्मरागमणौ ॥

ताम्रिकः । पु । कांस्यकारे ॥ त्रि । ताम्रसम्भवे ॥ ताम्रस्यायम् । अध्यात्मादित्वात् ठञ् ॥ ताम्रघट्टनं शिल्पमस्य वा शिल्पमिति ठक् ॥

ताम्रिका । स्त्री । गुञ्जायाम् ॥ मानरन्ध्रावाद्ये ॥

ताम्री । स्त्री । वाद्यविशेषे । मानरन्ध्रायाम् ॥ विकारिकायाम् ॥

तायनम् । न । स्फीततायाम् । समृद्धत्वे ॥ तायृ सन्तानपालनयोः । ल्युट् ॥

तायिकः । पु । तर्जिकाभिधदेशे ॥

तारः । पुं । वानरविशेषे ॥ मुक्ताविशुद्धौ ॥ शुद्धमौक्तिके ॥ देवीप्रणवे ॥ यथा । काश्यां विश्वेश्वरोऽहं गिरिपतितनया संयुतो वामभागे शुण्डादण्डेन दक्षे त्रिपथगतटिनीतीरशुद्धाम्बुभागे । मायाबीजञ्च कर्णे सुरमुनिसहितो ध्यानयुक्तं वदामि प्रीत्या लोकस्य तस्मात् सुरमुनिगणकैरुच्यते तारनामेति ॥ प्रणवे ॥ गर्भजन्मजरामृत्युलक्षणाद्भयात्तारयतीति तारः ॥ तरणे ॥ शिरोभवध्वनौ ॥ स्त्री । न । नयने ॥ नेत्र

मध्ये । कनीनिकायाम् ॥ न । रूप्ये ॥ अध्ययनरूपायांसिद्धौ ॥ पि । स्फुरितदीधितौ ॥ अभ्युज्ज्वलादेः ॥ निर्मले ॥ अभ्युच्चै. ॥ तारयति अतिक्रामति अन्यान् शब्दान् । तॄ° । बहुलमेतन्निदर्शन मितिचुरादिगणाद्‌याट् स्वार्थेणिच् । पचाद्यच् ॥ यद्वा । तार्यते ऽनेनवा । घञ् घोषा ॥

तारक । पु । दैत्यविशेषे ॥ कर्णधारे ॥ भेलके ॥ न । दृशि ॥ स्त्री । कनीनिकायाम् ॥ ऋक्षे ॥ त्रि । त्रातरि ॥ संसारसमुद्रस्य तरणकारणे तारयितरि ॥ अतिजगतीप्रभेदे वृत्तविशेषे । यथा । यदि तोटकवृत्तपदे गुरुरन्त्यम् भवतीह तदा किलतारकवृत्तम् । फणिनायकपिङ्गलवर्णित मेत द्धर पण्डितमण्डलिका हृतचित्तम् ॥ यथा । अतिभारतरं हृदि चन्दनपङ्क मनुते सरसीपत्र न विषशङ्कम् । तवदुस्तरतारवियोगपयोधे नहि पारमसौ भविता परमाधे. ॥ तारयति । तॄ° । ण्वुल् ॥

तारकजित् । पु । कार्त्तिकेये । षडानने ॥ तारक जयति । जि० । क्विप् । तुक् ॥

तारकराज । पु । चन्द्रे ॥

तारका । स्त्री । न । नेत्रकनीनिकाया



म् ॥ ऋक्षे । नक्षत्रे ॥ तारकाज्योतिषीत्यतइत्त्वन ॥ स्त्री । इन्द्रवारुण्याम् ॥

तारकारि । पु । कार्त्तिकेये । महासेने ॥ तारकस्यदैत्यविशेषस्य अरिः ॥

तारकिणी । स्त्री । निशायाम् ॥

तारकितम् । न । नभसि ॥ तारका सञ्जाता अस्य । तदस्यसञ्जाततारकादिभ्यइतच् ॥

तारण । पु । भेलके ॥ अष्टादशेवत्सरे ॥ अतिवृष्टिश्च जायेत धान्यस्याग्रपीडनम् । शस्यभवति सामान्य तारणे सुरवन्दिते ॥ त्रि । तरणकारयितरि ॥ तारयति । तॄ° । ल्यु. ॥ सन्तारणे ॥

तारणि । स्त्री । नावि ॥

तारतण्डुल । पु । धवलयावनाले ॥

तारतम्यम् । न । तरतमयोर्भावे । न्यूनाधिक्ये ॥ यथा । निर्धन निधनमेतयोर्द्वयोस्तारतम्यविधिमुग्धचेतसाम् ॥ बोधनाय विधिना विनिर्मितो रेफएवजयवैजयन्तिका ॥

तारतारम् । न । आगमाविरोधिना न्यायेन आगमार्थपरीक्षणरूपे ऊहे । तृतीयायांसिद्धौ ॥

तारदी । स्त्री । तरदीवृक्षे ॥

तारपुष्प । पु । कुन्दवृक्षे ॥

तारमाक्षिकम् । न । रूप्यमाक्षिके । रजते। पधातै। ॥ तारमाक्षिकमन्यत्तु तद्भवेद्रजतोपमम् । किञ्चिद्रजतसाहित्यात् तारमाक्षिकमीरितम् ॥ अनुकल्पतया तस्य ततोऽहीनगुणा स्मृता. । न केवलं रूप्यगुणा वर्त्तन्ते तारमाक्षिके ॥ द्रव्यान्तरस्य संसर्गात् सन्त्यन्येपि गुणा यत.॥ स्यात् तारमाक्षिकं स्वादु तिक्तं वृष्यं रसायनम् । चक्षुष्यं वस्तिरुक्कुष्ठपाण्डुमेहविषोदरम् ॥ अर्श. शोथ क्षयं कण्डुं त्रिदोषमपि नाशयेत् ॥ मन्दानलत्वं बलहानिमुग्रां विष्टम्भितां नेत्रगदान् सकुष्ठान । तथैव मालां व्रणपूर्विकाञ्च करोत्यशुद्धं रजताख्यमाक्षिकम् ॥ शोधनन्तु । कर्कोटीमेषशृङ्ग्युत्थै र्द्रवैर्जम्बीरजैर्दिनम् । भावये दातपे तीव्रे विमला शुद्ध्यतिध्रुवम् ॥ विमला तारमाक्षिकम । कर्कोटी खखसा । मारणन्तु कुलत्थस्य कषायेण घृष्टा तैलेन वा पुटेत् । तैलेन वाजमूत्रेण म्रियते तारमाक्षिकम् ॥

तारल' । पु । विटे ॥ इतिभूरिप्रयोगः॥

तारवायु । पु । अत्युच्चशब्दवतिपवने॥

तारविमला । स्त्री । तारमाक्षिके ॥

तारशुद्धिकरम् । न । सीसके ॥

तारा । स्त्री । बुद्धदेवताभेदे ॥ पञ्चकन्यान्तर्गतकन्यायाम् । वालिसुग्रीवयोर्भार्यायाम् ॥ सुरगुरोर्भार्यायाम् ॥ कनीनिकायाम् ॥ नक्षत्रे ॥ यथा । एकतारं नभोदृष्ट्वा आर्त्तेयो नारदो मुनिः । तावद्भवति चण्डालो यावदन्यं न पश्यति ॥ तत्र त्रिशान्नासन्नं यथा । हस्ता स्वाती श्रवणा अश्लेषे मृगशिरा नपुंसि स्यात् । पुंसि पुनर्वसुपुष्यौ मूलन्तु स्त्री स्त्रियां शेषा. ॥ शेषा. ताराइतिसम्बन्ध. ॥ चीडायाम् ॥ मुक्तायाम् ॥ शिवशक्तिरयाम् ॥ द्वितीयायां महाविद्यायाम् ॥ यथा । लीलया वाक्प्रदा यस्मात् तेन नीलसरस्वती । तारकत्वात् सदा तारा सुखमोक्षप्रदायिनी ॥ उग्रापत्तारिणी यस्मा दुग्रतारा प्रकीर्त्तितेति ॥ तरन्त्यनया । तृ० । भि० अङ् । ऋदृशोऽङीतिगुण: । णिचा समादृदीर्घः । अदन्तत्वाट्टाप् ॥

ताराकूटम् । न । तृतीयेयोटके । तारामैत्र्याम् ॥ यथा । वरयोदम्पकन्ययोः कन्यकोदरभावधि । गृहणङ्क्ते तेषष त्रिपञ्चसप्तमन्त्यसदिति ॥

तारापति. । पु । शिवे ॥ चन्द्रे ॥ बृहस्पतौ ॥ वालिनि ॥ सुग्रीवे ॥

तारापथः । पु । आकाशे ॥

तारापीड । पु । निशाकरे । चन्द्रे ॥

ताराभूषा । स्त्री । रात्र्याम् ॥

ताराभ्र । पु । कर्पूरे ॥

तारामण्डल । पु । ईश्वरगृहविशेषे ॥

तारामार्ग । पुं । आकाशे ॥

ताराराचि । स्त्री । आगमोक्ते पर्वविशेषे ॥ यथा । भाद्रे मासि कृष्णपक्षे भौमवारे कुलर्क्षगे । अर्द्धरात्रौ सञ्चमश्च सातारा रात्रिरीरितेति ॥

तारारि । पु । विटमाक्षिके ॥

तारावती । स्त्री । कालिकापुराणप्रसिद्धायां चन्द्रशेखरभूपपत्न्याम् ॥

तारिकम् । न । तरमूल्ये ॥

तारिका । स्त्री । ताडीतिख्याते तालरसे ॥

तारिणी । स्त्री । बुद्धदेव्यन्तरे । लोकेश्वरात्मजायाम् ॥ * ॥ शिवपत्न्याम् । द्वितीयायां महाविद्यायाम् ॥

तारुण्यम् । न । यौवने ॥ तरुणस्य भाव । ब्राह्मणादित्वात् ष्यञ् ॥

तारेय । पु । वालिवानरपुत्रे । अङ्गदे ॥ तारायाअपत्यम् । ढक् ॥

तार्क्षवम् । न । तर्क्षविकारे ॥ तदवयवे ॥ कोपधाच्चेत्यण् ॥

तार्किक । चि । तर्कतत्परे । तर्कशास्त्रविदि ॥ तर्कमधीते । ठक् ॥ सच षड्विधो यथा । स्याद्वादवाद्यार्हतः स्याच्छून्यवादीतु बौगत. १ । नैयायिकस्त्वक्षपादो २ । योग सांख्यस्तु कापिल ३ । वैशेषिक स्यादौलूक्यो ४ । बार्हस्पत्यस्तु नास्तिक. ५ । चार्वाकोलौकायतिकश्चै ६ ते षड पितार्किका ॥ आत्मनोऽचिद्रूपवादिनोऽनात्मवाद्येते स्वबुद्धिपरिकल्पित यदिच्छन्ति तद्वदन्ति ॥

तार्क्ष । पु । कश्यपे ॥

तार्क्षी । स्त्री । पातालगरुडीलतायाम् ॥

तार्क्ष्य । पु । अश्वे ॥ सर्पे ॥ गरुडाग्रजे ॥ गरुडे ॥ तार्क्षस्य कश्यपस्यापत्यम् । गर्गादित्वात् यञ् । बहुत्वे तार्क्षा. ॥ एकस्मिन्कल्पे तृक्षस्यमुनेरपत्यत्वात्तार्क्ष्योगरुड । गर्गादित्वात् यञ् । बहुत्वेयञोऽस्त्रेतिलुकि तृक्षाइत्यन्ये ॥ सुवर्णे ॥ स्यन्दने ॥ अश्वकर्णाख्यतरौ ॥ न । रसाञ्जने ॥

तार्क्ष्यजम् । न । रसाञ्जने ॥

तार्क्ष्यध्वजः । पु । हरौ । विष्णौ ॥ इति हेमचन्द्र. ॥

तार्क्ष्यनायक । पु । गरुडे ॥ इतिराजनिर्घण्ट ॥

तार्क्ष्यप्रसव । पु । अश्वकर्णवृक्षे ॥

तार्क्ष्यशैलम् । न । सतुत्थया दार्व्या कृताञ्जने । रसगर्भे । रसाञ्जने ॥ तार्क्ष्य

शैले भवम्। अण्॥

ताणैकम्। त्रि। तृणनिर्मिते॥

तार्त्तीयीक। त्रि। तृतीये॥ तीया ट्टीकक् स्वार्थे वा वाच्यः॥

ताल। पु। करतले॥ अङ्गुष्ठमध्यमाभ्यां समिते। विस्तृताभ्यामङ्गुष्ठमध्यमाभ्यां सम्मिते दीर्घपरिमाणविशेषे॥ तलस्येव। तल०। इत्यमेतिषण्॥ करास्फाले। करास्फोटे॥ कांस्यमयवाद्यभाण्डे॥ त्सरौ॥ तालद्रुमे। दीर्घपादपे। लेख्यपत्रे॥ पक्व तालफल पित्तरक्तश्लेष्मविवर्द्धनम्। दुर्जरं बहुमूत्रञ्च तन्द्राऽभिष्यन्दशुक्रदम्॥ तालमज्जातरुणः किञ्चिन्मदकरो लघुः। श्लेष्मलो वातपित्तघ्न. सस्नेहोमधुर सर.॥ तालमज्जा तालफलवीजमज्जा। तालज तरुणं तोय मतीवमदकृन्मतम्। अम्लीभूतं तदा तत् स्यात् पित्तकृद्वातदोषहृत्॥*॥ मानविशेषे॥ यथा। तालो द्वादशभिर्जानुपरिणाहपरिभ्रमैरिति। हस्तेन जानुमण्डलपरिभ्रमणं यावत्या कालमात्रया क्रियते तावतीभिर्द्वादशभिस्तालाख्य. कालांशोऽयंय॥*॥ गीतकालक्रियामाने। अयंस्वर इयत् कालंगेयः इयत्कालं विलम्बितम् इयत्कालद्रुतम् इयत्काल मध्यमिति वोधयितुम् ईदृशैर्हस्तैरङ्गुल्याकुञ्चनप्रसारणादिक्रियाभि र्नर्त्तितव्यं गातव्यञ्चेत्थं वद्धपैकालक्रिययोर्माने॥ कालस्य एकद्वित्रिमात्राद्युच्चारण नियमितस्य क्रियायाः परिस्पन्दात्मिकाया' परिच्छेदहेतुस्तालः॥*॥ तस्योत्पत्तिर्यथा। गौरीश्वरयोर्न्नृत्येन तालो वभूव। तत्प्रकारणम्। क्रिया कालस्य। ईश्वरनृत्यस्य ताण्डवम् गौर्य्यांनृत्यस्य लास्यमितिसंज्ञा। अर्थात् पुरुषनृत्यस्य ताण्डवम् नार्य्यानृत्यस्य लास्यमितिनाम। ताण्डवलास्ययो राद्यक्षरयो र्मेलनेनताल इतिसंज्ञा॥*॥ आदिगुरुत्रिकले (ऽ।)॥ तालयति। तल्यते वा। चु०। पचाद्यच्। घञ् वा॥ न। हरिताले॥ तालीशपत्रे॥ दुर्गासिंहासने॥ तालफले॥ धनुषि॥ तालस्यविकारः। तालादिभ्योण्। तालाद्धनुषि। अन्यत्तालमयम्॥

तालकम्। न। द्वारपिधानसाधनयन्त्रे। ताला इतिभाषा॥ हरिताले॥ तुवरिकायाम्

तालकाभ.। पु। हरितवर्णे॥ त्रि। तद्वति॥

तालक्षीरकम्। न। तालसम्भूतक्षीरे॥

तालकी । स्त्री । ⎫ तालजसुरायाम्
तालती । स्त्री । ⎭ । ताडी इतिभाषा॥

तालध्वज । पु । बलदेवे ॥ तालो ले-
खयपचो ध्वजो ऽस्य ॥

तालनवमी । स्त्री । भाद्रशुक्लनवम्याम्॥

तालध्वजा । स्त्री । पुरीविशेषे ॥

तालपत्रम् । न । ताडङ्के । कर्णाभरण-
विशेषे । कर्णिकायाम् ॥ तालस्य प
त्रम् । स्वर्णरचितस्या पीदमेवनाम
॥ तालतरो पर्णे ॥

तालपत्रिका । स्त्री । तालमूल्याम् ॥

तालपत्री । स्त्री । मूषिकपर्ण्याम् । र
ण्डायाम् ॥ मधुरौषधौ ॥

तालपर्णम् । न । मुरानामगन्धद्रव्ये ॥

तालपर्णी । स्त्री । मुरानामनि गन्धव
स्तुनि । गन्धिन्याम् ॥ ताल.पर्णमस्या
। तालशब्द तालपर्णसदृशे लाच-
णिक । पाककर्णेतिङीष ॥ मधुरि
कायाम् ॥

तालपुष्पम् । न । प्रपौण्डरीके ॥ ता-
लद्रुकुसुमे ॥

तालभृत् । पु । बलदेवे ॥

तालप्रलम्बम् । न । तालजटायाम् ॥

तालमूलिका । स्त्री । तालमूल्याम् ।
मुसल्याम् ॥ तालोमूलमस्या' । ताल
शब्दस्तालमूलसदृशे लाचणिक ।
पाककर्णेतिङीष् । स्वार्थे कन् ॥

तालमूली । स्त्री । तालमूलिकायाम् ।
दीर्घकन्दायाम् । मुसल्याम् ॥ ताल
मूलीतु विद्वद्भि मुंसलीति निगद्य
ते । मुसली मधुरा वृष्या वीर्योष्णा
वृंहणी गुरु. । तिक्ता रसायनी ह-
न्ति गुदजान्यनिल तथा ॥ ॥

ताललक्ष्मा । पु । बलदेवे ॥

तालवन्तम् । न । तालपत्रनिर्मिते व्य
जने ॥ यथा । परे ब्रह्मणिविज्ञाते
समस्तैर्नियमैरलम् । तालवृन्तन
किङ्कार्यं लब्धे मलयमारुते ॥ अस्य
वायोर्गुणा यथा । त्रिदोषशमनोवा
युर्लघुरस्य प्रकीर्त्तितइति ॥

तालवृन्तकम् । न । व्यजने ॥ तालस्ये
वहन्तमस्य । तालेकरतले वृन्तमि
ववन्धनमस्यवा ॥

तालव्यम् । त्रि । तालुजाते ॥ शरी
रावयवत्वात् यत् ॥

तालाख्या । स्त्री । मुरायाम् ॥

तालाङ्क । पु । बलभद्रे । प्रलम्बघ्ने ॥ ता
लोवृत्तविशेषो ऽङ्को ध्वजो ऽस्य॥
करपत्रे ॥ शाकभेदे ॥ महालक्षण
सम्पूर्णपुरुषे ॥ पुस्तके ॥ हरे ॥

तालावचर । पु । नटे ॥ इ०त्रि० ॥

तालि. । स्त्री । भूम्यामलक्याम् ॥

तालिक । पु । प्रसारिताङ्गुलिपाणौ ।
चपेटे । प्रतले ॥ लिखितस्यनिवन्ध

ने । काञ्चनक्याम् ॥

तालिका । स्त्री । चपेटे ॥ तालमूल्याम् ॥ ताम्रवल्ल्याम् ॥

तालितम् । न । वाद्यभाण्डे ॥ तुलितपटे ॥ गुणे ॥

तालिश. । पु । शैले । पर्वते ॥

ताली । स्त्री । जटायाम् । वितुन्नकौषधौ । भुञ आवला इतिभाषा ॥ तालद्रुमे ॥ आढक्याम् । तुवरिकायाम् । अरहर इतिभाषा ॥ द्वारोद्घाटनयन्त्रे ॥ तालमूल्याम् । ताम्रवल्ल्याम् ॥ तालजातसुरायाम् । ताडी इति भाषा ॥ * ॥ मध्याख्यच्छन्दोभेदे ॥ यथा । ताली सा निर्दिष्टा । उद्दिष्टो मायत्र ॥ यथा । आनीते जानीते । सा सारूप्यं वैरूप्यम् ॥ अस्यनारीत्यपि सञ्ज्ञोक्ताछन्दोमञ्जर्याम् । मोनारी ॥ तालयति । तल० । अच्मात् । गौरादित्वाज्जातित्वाद्वाङीष् ॥

तालीपत्रम् । न । तालीशे ॥

तालीशम् । न । तालीशपत्रे ॥ तालीशं लघु तिक्तोष्णं श्वासकासकफाऽनिलान् । निहन्त्यरुचिगुल्मामवह्निमान्द्यक्षयामयान् ॥ भूम्यामलक्याम् ॥

तालीशपत्रम् । न । तालीशख्याते वृक्षविशेषे । धात्रीपत्रे । शुकोदरे ॥ भूम्यामलक्याम् ॥

तालु । न । काकुदे । जिह्वेन्द्रियाधिष्ठाने स्वनाम्नैव प्रसिद्धे ॥ तरन्त्यनेन वर्णा. । तॄ० । त्रोरश्चल इति ञुण् ॥ तालयति । तल० । चु० । मृगय्वादित्वात् कुर्वा ॥

तालुकम् । न । तालुनि ॥ स्वार्थेयावादित्वात् कन् ॥

तालुजिह्वः । पु । कुम्भीरे ॥

तालूर. । पु । आवर्त्ते ॥

तावक' । त्रि । त्वदीये ॥ तवायम् । तस्येदमित्यण् । तवकममकावेकवचने इति तवकादेश. । स्त्रियां तावकी ॥

तावकीन' । त्रि । त्वदीये ॥ तवायम् । युष्मदस्मदोरन्यतरस्यांखञ्चेति खञ् । पश्चात्तवकादेश' ॥

तावत् । अ । माने ॥ अनुक्रमे ॥ अवधारणे ॥ सम्भ्रमे ॥ परिच्छेदे ॥ कार्त्स्न्ये ॥ अधिकारे ॥ अवधौ ॥ तत् परिमाणमस्य । तद्धिता इति बहुवचनेनान्येऽनुक्ताअपि तद्धिता ज्ञापिता' । तेन डावतुप्रत्यय ॥ तदादित्यर्थे ॥ यथा । भर्त्तापितावत् क्रथकैशिकानामिति रघु ॥

तावान् । त्रि । तत्परिमाणविशिष्टे ॥ ॥ तत् परिमाणमस्य । यत्तदेतेभ्य

परिमाणे इति वतुप्। आसवं नानाद्र व्याख्यम् ॥

तावतिथ । त्रि । तावताम् पूरणे ॥ ड ट् । वतोरिथुक् ॥

तावरम् । न । चापगुणे ॥ इतिभूरि० ॥

ताविष । पुं । स्वर्गे ॥ समुद्रे ॥ काञ्चने ॥ तवेति सौत्रोधातुः । तवे र्णिद्वेतिटिषच् ॥

ताविषी । स्त्री । चन्द्रकन्यायाम् ॥ भूमौ ॥ नद्याम् ॥ देवकन्यायाम् ॥ टित्वान्ङीप् ॥

तावुरि । पु । वृषराशौ ॥ इतिहृ० ॥

ताहून. । पु । व्रणे ॥

तिक्त । पु । तीता इतिप्रसिद्धे रसे ॥ तिक्त शीत तृषामूर्च्छाज्वरपित्त कफान् जयेत् । रुच्य स्वयमरोचि घ्नं कण्ठकुष्ठास्रशोधन ॥ सुगन्धे ॥ वरुणद्रुमे ॥ कुटजे ॥ न । पर्पटौ षधौ ॥ त्रि । तिक्तरसान्विते ॥ तेज यति । तिज० । सामान्यापेक्षज्ञापका त्त्चुरादीनाणिजभावे गत्यर्थाकर्मके तिक्त ॥

तिक्तक । पु । पटोले ॥ भूमिनिम्बे । चिरतिक्ते । चिरायता इतिभाषा ॥ कृष्णखदिरे ॥ निम्बे ॥ इङ्गुदीवृक्षे ॥ तिक्तार्थे ॥ तिक्तएव । स्वार्थे कन् ॥

तिक्तकन्दिका । स्त्री । गन्धपत्रायाम् ॥



तिक्तकर्कोटकी । स्त्री । वन्ध्याकर्कोटि कायाम् । नागदन्त्याम् । बाँझकक रोल इतिभाषा ॥

तिक्तका । स्त्री । तिक्तालाबुाम् । कटु तुम्ब्याम् ॥

तिक्तगन्धिका । स्त्री । वराहक्रान्ता याम् ॥

तिक्तगुञ्जा । स्त्री । करञ्जे । चुद्ररसा याम् ॥

तिक्ततण्डुला । स्त्री । पिप्पल्याम् ॥

तिक्ततुण्डी । स्त्री । कटुतुण्डीलता याम् ॥

तिक्ततुम्बी । स्त्री । कटुतुम्ब्याम् ॥ तिक्ताचासौतुम्बीच ॥

तिक्तदुग्धा । स्त्री । अजशृङ्ग्याम् ॥ क्षीरिण्याम् ॥

तिक्तद्रुम । पु । पञ्चतिक्ते ॥

तिक्तधातु । पु । पित्ते ॥

तिक्तपत्र । पु । कर्कोटके ॥ तिक्तानि पत्राणि यस्य ॥

तिक्तपर्व्वा । स्त्री । हिलमोच्याम् ॥ गुडूच्याम् ॥ मधुयष्ट्याम् ॥ दूर्वा याम् ॥

तिक्तपुष्पा । स्त्री । पाठायाम् ॥

तिक्तफल । पु । कतकवृक्षे ॥

तिक्तफला । स्त्री । यवतिक्तायाम्लतायाम् ॥ वार्त्ताक्याम् ॥ षड्भुजायाम् ॥

इति राजनिर्घण्टः ॥

तिक्तभद्र । पु । पटोले ॥

तिक्तमरिच । पु । कतकवृक्षे ॥

तिक्तरोहिणिका । स्त्री । } कटुका
तिक्तरोहिणी । स्त्री । } याम् । कटुक्याम् ॥ तिक्ताचासौरोहिणीच ॥

तिक्तवल्ली । स्त्री । मूर्वालतायाम् ॥

तिक्तबीजा । स्त्री । कटुतुम्ब्याम् ॥

तिक्तशाक । पु । खदिरवृक्षे ॥ वरुणद्रुमे ॥ तिक्तःशाकोऽस्यपत्राणाम् । वरुणस्य शाकमध्ये पाठात् ॥ पत्रसुन्दरवृक्षे ॥

तिक्तसार । पुं । खदिरे ॥ तिक्तसारोस्य ॥ न । दीर्घरोहिषकतृणे ॥

तिक्ता । स्त्री । कटुक्याम् ॥ पाठायाम् ॥ यवतिक्तायां लतायाम् ॥ षड्भुजायाम् ॥ छिक्कन्याम् ॥ टाप् ॥

तिक्ताख्या । स्त्री । कटुतुम्ब्याम् ॥

तिक्ताङ्गा । स्त्री । पातालगरुडीलतायाम् ॥

तिग्मम् । न । तीक्ष्णे । पैना इतिभाषा ॥ त्रि । तद्वति ॥ तेजयति । तिज० । युजिरुचितिजां कुश्चेतिमक् कवर्गश्चान्तादेश ॥

तिग्मरश्मि । पु । सूर्ये ॥ तिग्मारश्मयोयस्य ॥

तिग्मांशु. । पु । सूर्ये ॥ तिग्मा करा: अंशवोऽस्य ॥

तिजिल । पु । चन्द्रे ॥ तेजते । तिज० । गुपादिभ्य किदितीलच् ॥

तिण्टी । स्त्री । त्रिवृति ॥ सतीलायाम् ॥

तितउ । पु । चालन्याम् ॥ तनोति तन्यते वा । तनु० । तनोतेर्डउ सन्वच्च । सन्वद्भावादित्वमभ्यासस्येत्वञ्च । क्षुद्रच्छिद्रसमोपेत चालनतितउस्मृतमित्युक्ते क्लीवत्वमपि ॥

तितिक्षा । स्त्री । क्षान्तौ । क्षमायाम् । परापराधसहने ॥ सर्वदु. खसहने । शीतोष्णमानापमानलाभालाभशोकहर्षादिद्वन्द्वसहिष्णुतायाम् ॥ अहोतितिक्षामाहात्म्यमहोदानफल मश्नुत् । यदागतोहरिश्चन्द्रोमहेन्द्रस्यसलोकताम् ॥ तिजे: क्षमायां सन्नन्तादप्रत्ययेटाप् ॥

तितिक्षित: । त्रि । क्षान्ते । सोढे ॥ तितिक्षासञ्जाताऽस्य । तारकादिभ्यात् इतच् ॥

तितिक्षु । त्रि । क्षमान्विते । क्षान्ते । सहिष्णौ । जीवनविच्छेदव्यतिरिक्तशीतादिद्वन्द्वसहिष्णौ तितिक्षाख्यातार ॥ तितिक्षते । तिजे क्षमायाम् । गुप्तिज्किद्भ्य.सन् । सनाशंसभिक्ष उ. ॥

तितिभ. । पु । इन्द्रगोपकीटे ॥ इ० हे० ॥

तैरणी । स्त्री । कुनील्याम् । रागद्वेषु पविशेषे ॥

तैर्थिक । पु । तीर्थकरे । कपिलकणभुगादिषु ॥

तैर्य्यग्योन । पु । त्रिविधभूतादिसर्गेष्वेकस्मिन् सर्गे ॥ सत्वपशुमृगपक्षिसरीसृपस्थावरभेदात् पञ्चविधोभवति ॥

तैलम् । न । तिलसर्षपादिजनितस्नेहे । प्रचणे । स्नेहे । तेल इतिभाषा ॥ तिलस्यविकार. । तस्यविकारइत्यऽण् ॥ तिलादिस्नेहवस्तूनां स्नेह स्तैलमुदाहृतम् । तत्तुवातहरसर्वंविशेषात्तिलसम्भवम् ॥ नास्तितैलात्परं किञ्चिदौषधमारुतापहम् ॥ तिलतैल गुरुस्थैर्यबलवर्णकरं सरम् । वृष्यं विकाशि विशदं मधुरं रसपाकयो ॥ सूक्ष्मं कषायानुरसं तिक्तवातकफ पहम् । वीर्य्येणोष्णं हिमस्पर्शं वृंहणं रक्तपित्तकृत् ॥ लेखन बद्धविण्मूत्रं त्वग्गर्भाशयशोधनम् । दीपन वुद्धिद मेध्य व्यवायि व्रणमेहनुत् ॥ श्रोत्रयोनिशिर शूलनाशनं लघुताकरम् । त्वच्यकेश्यञ्च चक्षुष्यमभ्यङ्गे भोजने ऽन्यथा ॥ छिन्नभिन्नच्युतोत्पिष्टमथितक्षतपिच्छिते । भग्नस्फुटितविद्धाग्निदग्धविश्लिष्टदारि



ते ॥ तथाभिहितनिर्भग्नमृगव्याघ्रादिविक्षते । वस्तौ पानेऽन्नसंस्कारे नस्येकर्णाक्षिपूरणे ॥ सेकाभ्यङ्गावगाहेषु तिलतैलं प्रशस्यते । * । ननुलेखनवृंहणयो कथ सामानाधिकरण्यमित्याह । सूक्ष्मादिदुष्ट पवन स्त्रोत सङ्कोचयेद्यदा । रसोऽसम्यग्वहन् कार्श्यं कुर्याद्रक्ताद्यवर्द्धयन् ॥ तेषुप्रविष्टसरतासौक्ष्म्यस्निग्धत्वमार्द्दवै. । तैलसम रस नेतु कृशानां तेन वृंहणम् ॥ व्यवायि सूक्ष्मतीक्ष्णोष्णसरत्वैर्मेदस क्षयम् । शनै. प्रकुरुते तैलं तेन लेखन मीरितम् ॥ द्रुत पुरीषं वध्नाति स्वलित तत् प्रवर्त्तयेत् । ग्राहक सारक चापि तेन तैलमुदीरितम् ॥ घृत मब्दात्परं पक्वं हीनवीर्यं प्रजायते । तैलं पक्वमपक्वं वा चिरस्थायिगुणाधिकम् ॥ तैलं स्वयोनिगुणकृद्वाग्भटेनाखिलं मतम् । अत. शेषस्यतैलस्यगुणाज्ञेया'स्वयोनिवत् ॥ तैलानासार्षपादीना यथास्थान गुणेरणम् ॥ * ॥ प्रात. स्नाने व्रते श्राद्धे द्वादश्यां ग्रहणे तथा । मद्यलेपसम तैलं तस्मात्तैलं विवर्जयेत् ॥ घृतञ्च सार्षपतैलं यत्तैलंपुष्पवासितम् । अदुष्टपक्वतैलञ्च तैलाभ्यङ्गेच नित्यश ॥ * ॥ अर्केनूनंदह

तिष्टद्य कीर्त्तिलाभश्चसोमे भौमे स्वत्युर्भवति नियत चन्द्रजेपुत्रलाभ । अर्थग्लानिर्भवतिचगुरौ भार्गवेश्शो कयुक्त स्तैलाभ्यङ्गात् तनयमरणक्ष्र्दयैजेदीर्घमायु ॥ सिद्धके ॥

तैलकन्द । पु । तिलाङ्कितदले । द्रावककन्दे ॥ लोहद्राविस्व कटुत्वमुष्णत्व वातापस्मारविषशोफनाशित्वर सबन्धकारित्व देहसिद्धिकारित्वादयोऽस्यगुणा इतिराजनिर्घण्ट ॥

तैलकार । पु । तेली इति प्रसिद्धे वर्णसङ्करजातिप्रभेदे । धूसरे । चाक्रिके । तैलिनि ॥ कोटकस्त्रीगर्भे कुम्भकाराज्जातोयमिति । ब्र० ब्र० ख॥

तैलकिट्टम् । न । खल इति भाषाप्रसिद्धे तैलमले । पिण्याके ॥

तैलङ्ग । पु । अन्ध्रदेशे ॥ श्रीशैलन्तुसमारभ्य चोलेशान्मध्यभागत । तैलङ्गदेशोदेवेशि ध्यानाध्ययनतत्पर ॥

तैलचौरिका । स्त्री । तैलपायिकायाम्॥

तैलद्रोणी । स्त्री । काष्ठपर्यन्तमज्जनार्थं तैलपूर्णा काष्ठादिनिर्मितेपात्रविशेषे ॥ तत्रावस्थितिगुणा । वातरोगव्याकुष्ठरोगपङ्गुबाधिर्यमिन्मिनगद्गदधन्वङ्गस्तब्धपृष्ठप्रचलितपवनगात्रकम्पकपाटीग्रीवा भङ्गापतन्त्रकयक्षधिरभवमूत्रकृच्छ्रवस्तिरोगेषु शस्तत्व

मितिराजवल्लभ ॥

तैलधान्यम् । न । तिलादिषु ॥ तिलातसीचतोरीचत्रिविधश्चापिसर्षप । द्विधाराजीखाखसञ्चबीज कौसुम्भसम्भवम् । एतानितैलधान्यानिप्रोक्तानिपूर्वसूरिभि ॥

तैलपर्ण । पु । पर्वतविशेषे ॥ न । ग्रन्थिपर्णे ॥

तैलपर्णकम् । न । ग्रन्थिपर्णवृक्षे ॥

तैलपर्णिकम् । न । हरिचन्दने ॥ तिलपर्णीवृक्षविशेषे जातम् । तत्रजातइत्यण् । ङीप् । स्वार्थेकन् । केया इतिह्रस्व ॥ तैलपर्णीगिरिस्तस्याकारइतिस्वामी ॥ पु । चन्दनविशेषे ॥

तैलपर्णी । स्त्री । मलयजे चन्दने ॥ श्रीवासे ॥ सिल्हके ॥ तिलपर्णीवृक्षेजाता । तत्रजातइत्यण् । ङीप्॥

तैलपा । स्त्री । तैलपायिकायाम् ॥

तैलपायिका । स्त्री । सपक्षकीटविशेषे । घरोष्पयाम् । तिलचटा इति भाषा ॥ तैल पिबति । पापाने । ण्वुल् ॥

तैलपिपीलिका । स्त्री । पिपीलिकाप्रभेदे । कपिजाङ्गिकायाम् ॥

तैलफल । पु । इङ्गुद्याम् ॥ बिभीतके ॥

तैलभाविनी । स्त्री । जातीपुष्पवृक्षे ॥

तैलमाली । स्त्री । वर्त्याम् ॥ दीपकू

प्याम् ॥

तैलम्पाता । स्त्री । स्वधायाम् ॥ पतन म् पातः । तिलस्यपात । तिलपातो ऽस्याम् । घञन्तात्क्रियेतिल । घञन्तात् क्रियावाचिनः प्रथमान्ता दस्यामित्यर्थेञ स्यात् तदन्तस्त्रिया म् । श्येनतिलस्तेतिमुम् ॥

तैलसाधनम् । न । गन्धद्रव्यविशेषे । काकोले । कक्कोले । काकला इति गौडेषु प्रसिद्धे कोषफले ॥

तैलस्फटिकः । पु । तृणमणौ ॥ इ० हे ॥

तैलाक्तः । वि । तैलेनसिक्ते ॥

तैलागुरु । न । दाहागुरुणि ॥

तैलाटी । स्त्री । वरटायाम् ॥

तैलाम्बुका । स्त्री । तैलपायिकायाम् ॥

तैलिकः । पु । तैलकारे । तैलार्थंतिला दिबीजानां पेष्टरि ॥

तैली । पु । तैलकारे । चाक्रिके ॥ त्रि । तैलसम्बन्धिनि ॥

तैलिनी । स्त्री । दशावर्त्याम् । तैल कीटे । पक्षिन्ध्यायाम् ॥

तैलिशाला । स्त्री । तैलिकगेहे । य न्त्रगृहे ॥

तैलीनम् । न । तिल्ये । तिलक्षेत्रे । तिलानां भवन क्षेत्रम् । विभाषाति लेतिखञ्चेत्खञ् ॥

तैषः । पु । पौषमासे ॥ तिष्येणयुक्ता पौर्णमासी अस्मिन् । सास्मिन् पौर्णमासीत्यर्थे सन्धिवेलाद्यृतुनक्ष त्रेभ्योऽणित्यण् । तिष्यपुष्ययोर्नक्षत्रा णियलोप । ङीप् ॥ ततसास्मिन पौर्णमासीत्यण् ॥

तैषी । स्त्री । पौष्याम् ॥ तिष्येणयु क्ता पौर्णमास्यस्मिन् । नक्षत्रेणयुक्ते त्यण् । तिष्यपुष्ययोर्नक्षत्राणियलोपः । ङीप् ॥

तोकम् । न । अपत्ये । पुत्रदुहितरौ ॥ तौति । तु वृद्धौ हिंसागतिपूर्तिषु । बाहुलकात्कः ॥

तोक्मः । पु । हरिते ॥ हरितवर्णे । अ पक्वयवे ॥ यवाङ्कुरे इति श्रीधर स्वामी ॥ हरिद्वर्णे ॥ न । कर्णमले ॥ तकति तक्यते वा । तकहसने । स्मे च । बाहुलकान्मः ओत्वञ्च ॥ मेघे ॥ इन्द्रयवमात्रः ॥

तोटकम् । न । द्वादशाक्षरपादे जगती छन्दोभेदे ॥ यथा । विनिधेहि चतु सगणं रुचिरं रविसंख्यकवर्णकृत सुचिरम् । फणिनायकपिङ्गलसंकथि तं ध्रुव तोटकवृत्तमिदं रुचिरम् ॥ यथा । सकलं मनसा क्रियया जनि तं समवेक्ष्यविनाशिलयात्मजनम् । प रिचिन्तय किञ्चिदतोऽनिशमाद्यवि नाशिकुलेन न कश्चिदितीति ॥

तोड । पु । भेदे ॥ तोडनम् । तुडतोडने ॥ घञ् ॥

तोडनम् । न । दारणे ॥ हिंसने । भेदे ॥

तोत्रम् । न । प्रतोदे । प्राजने । गवादिपशूनां ताडनदण्डे ॥ वैणुके । हस्तिन स्ताडनदण्डे ॥ तुद्यतेऽनेन । तुद्व्यथने । दाम्नीतिष्ट्रन् ॥

तोद । पु । व्यथायाम् ॥ तोदनम् । तुद० । घञ् ॥

तोदनम् । न । व्यथने ॥ तोत्रे । वृषभादिप्रेरणदण्डे ॥ तुद० । ल्युट् ॥

तोदित । त्रि । प्रेरिते ॥

तोमर । पु । न । शर्वलायाम् । गडाँसाइति सवली इतिवा ख्यातेऽस्त्रे ॥ हस्तक्षेप्यसशल्यदण्डे । रायवास इतिभाषा ॥ स्थूलाग्रगदायाम् ॥ सब्वादि (।ऽ) षिकले ॥ वृत्तौछन्दोभेदे ॥ यथा । प्रथमकर विनिधाय जगणद्वयमनिधाय । कुरु तोमर सुखकारि फणिराजवक्रविहारि ॥ यथा । सखि मादके मधुमासि व्रजसत्वर किमिहासि । सहतेनकि विहरामि किमुपावकं प्रविशामीति ॥

तोमरधर । पु । अग्नौ ॥ इतिशब्दा० ॥

तोमरिका । स्त्री । आढक्याम् । तुमर इतिभाषा ॥

तोयम् । न । अम्बुनि । जले ॥ एकहस्तोधृत तोय मभक्ष्य सर्वसम्मतम् ॥ उद्धृत वामहस्तेन यत्तोय पिबतिद्विज । सुरापानेन तुल्य स्यात्मनुराह प्रजापति ॥ अगन्धमव्यक्तरस शीतलञ्च तृषापहम् । अच्छ लघुच पथ्यञ्च तोयगुणवदुच्यते ॥ तौति । तु सौत्रआचरणार्थे । औणादिकोय ॥ पूर्वाषाढायाम् ॥

तोयकाम । पु । अम्बुवेतसे । परिव्याधे ॥ त्रि । जलाभिलाषिणि ॥

तोयकृच्छ्रम् । न । जलमात्रपानरूप व्रतविशेषे ॥ इतिमिताक्षरा ॥

तोयडिम्भ । पु । घनोपले ॥ इ०हा० ॥

तोयद । पुं । मेघे ॥ मुस्तके ॥ न । आज्ये ॥ त्रि । जलदातरि ॥ जलदान माहात्म्यमहाभारते दानधर्मे । अन्नेदत्तेनरेणेह प्राणादत्ताभवन्तुत । प्राणदानाद्धि परमनदान मिह विद्यते ॥ अन्न वापिप्रभवति पानीयात् कुरुसत्तम । नीरजातेन हि विना न किञ्चित् सम्प्रवर्त्तते ॥ अन्नौषध्योमहाराज वीरुधश्चजलोद्भवा । यत. प्राणभृतां प्राणा सम्भवन्ति विशापते ॥ तस्मात्पानीयदानाद्वै नपरं विद्यते क्वचित् । तद्ददस्वनरो निच्छयदीच्छेद्भूतिमात्मन ॥ धन्य यशस्य मायुष्य जलदान मिहोच्यते

। यश्चैश्वाप्यधि कौन्तेय सदा तिष्ठति तोयदः ॥ सर्वकामानवाप्नोतिकीर्तिञ्चैवेहशाश्वतीम् । प्रेत्य चानन्त्यमश्नाति पापेभ्यश्चप्रमुच्यते ॥ तोयदो मनुजव्याघ्रस्वर्गं गत्वामहाद्युते । अक्षयान् समवाप्नोतिलोकानित्यब्रवीन्मनुरिति ॥ तोयं ददाति । डु दाञ्० । क ॥

तोयधरः । पु । मुस्तायाम् ॥ सुनिषण्णाख्यभेषजे ॥ घने । मेघे ॥ तोयस्यधर ॥

तोयधि । पु । उदन्वति । समुद्रे ॥ तोयानि धीयन्तेऽत्र । डुधाञ्० । कर्मण्यधिकरणेचेतिकि । आतोलोपः ॥

तोयधिप्रियम् । न । लवङ्गे ॥

तोयनिधिः । पु । अब्धौ । समुद्रे ॥ तोयानि निधीयन्तेऽत्र । डुधाञ् किः ॥ तोयानां निधिर्वा ॥

तोयपिप्पली । स्त्री । लाङ्गल्याम् । मकुलादन्याम् । गौडभाषया काँचडा इतिप्रसिद्धे जलजशाके ॥ तोयस्य पिप्पलीव ॥

तोयपुष्पी । स्त्री । पाटलावृक्षे ॥

तोयप्रसादनः । पु । न । कतक ॥ षष्ठीसमासः ॥

तोयप्रसादनफलम् । न । कतकफले ॥

तोयफला । स्त्री । इर्वारौ ॥

तोयवल्ली स्त्री । कारवेल्ले ॥

तोयशाला । स्त्री । प्रपायाम् ॥

तोयशुक्तिका । स्त्री । जलशुक्तौ ॥

तोयसूचक । पु । भेके ॥ इ० शब्दा० ॥

तोयात्मा । स्त्री । विष्णौ ॥ यथा । यस्य केशेषु जीमूता नद्य सर्वाङ्गसन्धिषु । कुक्षौसमुद्राश्चत्वार स्तस्मै तोयात्मनेनमइति ॥

तोयाधिवासिनी । स्त्री । पाटलावृक्षे ॥

तोयेशः । पु । वरुणे ॥ शतभिषायाम् ॥

तोरणः । पु । न । बहिर्द्वारे । द्वारबाह्यभागे ॥ स्तम्भोपरि चिते सिंहद्वारादौ ॥ तुरन्त्यत्र । तुरत्वरणहिंसयो । अधिकरणे ल्युट् गुणा ॥ तोलयन्त्यत्रेतिवा । तुलउन्माने । रलयोरेकत्वम् ॥ तुतुरत्यनेनवा । तु रत्वरणे । जौहोत्यादिकः ॥ न । कन्धरायाम् ॥ कन्धरातोरणकण्ठेति हारावली ॥

तोल । पु । न । गुञ्जाशीतिसम्मित । तोलके ॥

तोलक । पु । न । कोले । इङ्गुदे । वटके । कर्षार्द्धे । अशीतिगुञ्जामिते ॥ षोडशमाषके षण्णवतिरक्तिकापरिमाणे । तोला इतिभाषा । कर्षे ॥ इतिवैद्यकपरिभाषा ॥

तोषः । पु । तुष्टौ ॥

तौक्षिक । पुं । धनूराशौ ॥

तौतातिकम् । न । तुतातभट्टकृतेमीमासाशास्त्रे ॥

तौतिक । पु । शुक्तौ ॥ न । मुक्तायाम् ॥

तौरङ्गिक । पु । अश्वारोहे । सादिनि ॥

तौरायणिक । पु । यजमाने ॥ तुरायणं यज्ञविशेषं निर्वर्त्तयति । पारायण तुरायणेत्यादिनाठञ् ॥

तौर्यम् । न । तुर्यमुरजादौ भवेशब्दरूपे ॥

तौर्यत्रिकम् । न । नृत्यगीतवाद्येषु समुदितेषु ॥ तुरीत्वरायाम् । रूक्कलोशब्दे । गुण वाधित्वा वाहुलकादुखिचेतिदीर्घं । तूर्यं मुरजादि तत्रभव तौर्यं शब्द । चयोणा यस्य तत्त्रिकम् । सङ्ख्याया अतिशदन्ताया कन् । तौर्योपलक्षित त्रिकमिति विग्रह ॥

तौल. । पु । तुलाराशौ । तौलिनि ॥ त्रि । तुलासम्बन्धिनि ॥

तौलिक । पु । चित्रकारे ॥

तौलिकिक । पु । चित्रकारे । रङ्गाजीवे ॥

तौल्यम् । त्रि । तुलया परिच्छिन्ने ॥ तुल्यमेव । स्वार्थे ष्यञ् ॥

तौषारम् । न । हिमोदकविशेषे । तुषारजले ॥ अपिनद्यः समुद्रान्ते वह्निरापस्तदुद्भवाः । धूमावयवनिर्मुक्तास्तौषाराख्यास्तुता स्मृता ॥ अपथ्या प्राणिना प्रायो भूरुहाणान्तु ताहिता ॥ तुषाराम्बु हिम रूक्ष स्याद्वातल मपित्तलम् । कफोरुस्तम्भकण्ठाग्निमेहेगण्डादिरोगनुत् ॥नदीमारभ्य समुद्रपर्यन्तवह्निराप्तेतदुद्भवा वह्निभवा धूमावयवनिर्मुक्ता धूमांशरहिता आप तुषाराख्याइत्यर्थ ॥ तुषारस्येदम् । तस्येदमित्यण् ॥

त्यक्त । त्रि । हीने । विधूते । समुज्झिते । कृतत्यागे । छोडा इतिभाषा ॥ त्यज्यतेस्म । त्यजहानौ । क्त ॥

त्यक्तव्य । त्रि । त्यजनीये ॥

त्यक्तसर्वपरिग्रह । त्रि । समस्तभोगोपकरणरहिते विरक्ते ॥ त्यक्ता सर्वे परिग्रहा येन ॥

त्यजनम् । न । त्यागे । वर्ज्जने ॥

त्य । त्रि । तच्छब्दार्थे ॥ सर्वादि । त्यजति । त्यज० । त्यजितनियजिभ्यो डिदित्यदि ॥ स्त्रियां स्या । क्लीबे त्यत् ॥ वाक्याकाशयो ॥

त्याग । पु । दाने । अर्थिषु मुक्तहस्तताया म् । धर्मेणोपार्जितार्थस्य सत्पात्रे विनियोगे ॥ वर्ज्जने ॥ सर्वकर्मफलाभिसन्धिवर्जने । कर्माधिकारिक

त्यागः

र्वकफलाभिसन्धिपूर्वककर्मत्यागे ॥
सच सात्त्विकादिभेदात् त्रिविधोभव
ति ॥ यथा । नियतस्यतु सन्न्यास क
र्मणो नोपपद्यते । मोहात्तस्यपरि-
त्याग स्तामस परिकीर्त्तित ॥ १ ॥
दु खमित्येवयत्कर्म कायक्लेशभयात्
त्यजेत् । स कृत्वाराजसत्याग नैव-
त्यागफलल्लभेत् ॥ २ ॥ कार्यमित्ये
वयत्कर्म नियत क्रियते ऽर्जुन । सङ्ग
त्यक्ता फलच्चैव स त्याग' सात्त्वि-
कोमत ॥ ३ ॥ अपिच । विशेषणा
भावात् विशेष्याभावात् उभयाभा
वाच्च त्रिविधो भवति । तथाहि । फ
लाभिसन्धिपूर्वककर्मत्याग सत्य
पिकर्मणि फलाभिसन्धित्यागादेक.
१ । सचसात्त्विकत्वाद्धेय ॥ सत्य
पिफलाभिसन्धौ कर्मत्यागात् द्विती
य २ । सचदु खबुद्ध्याकृतोराजस
विपर्यासेनकृतस्तामस इतिभेदात्
द्विविधोहेयो भवति ॥ फलाभिसन्धे.
कर्मणश्चत्यागात् तृतीय. ३ । सच
कर्मानधिकारिकर्त्तृकोनैर्गुण्यरूप.
॥ सोपिसाधनफलभेदेन द्विविध । त
त्रसात्त्विकेन फलाभिसन्धित्यागपूर्व
ककर्मानुष्ठानरूपेण त्यागेन शुद्धा
न्त करणस्योत्पन्नविविदिषस्य आत्म
ज्ञानसाधनश्रवणाख्य वेदान्तविचा-

त्यागी

राय फलाभिसन्धिरहितस्यान्त कर
णशुद्धौ सत्यां तत्साधनस्य कर्मणो
वैतुष्ण्येजातद्ध्वा ऽवचननस्य परित्या
ग स एक साधनभूतो विविदिषास
न्न्यास उच्यते ॥ द्वितीयस्तु जन्मान्त
रकृतसाधना ऽभ्यासपरिपाकादस्मि
न् जन्मनि आदावेवोत्पन्नात्मबोधस्य
कृतकृत्यस्य स्वतएवफलाभिसन्धे
कर्मणश्चपरित्याग. फलभूत सविद्व
त्सन्न्यासइत्युच्यते ॥ * ॥ त्याग
प्रपञ्चरूपस्य चिदात्मत्त्वावलोकनात्
। त्यागोहि महतां पूज्य. सद्योमोक्ष
मयोयत ॥ * ॥ त्यागेन युक्ता दि
वमुत्पतन्ति त्यागेनहीना नरकं व्रज
न्ति । न त्यागिना दुष्करमस्ति कि
ञ्चित् त्यागोहि सर्वव्यसनानिहन्ति
॥ त्यजनम् । त्यजहानौ । घञ् ॥ वि
वेकिपुरुषे ॥ इतिशब्दरत्नावली ॥
उपेक्षायाम् ॥

त्यागफलम् । न । ज्ञाननिष्ठायाम् ॥
त्यागी । त्रि । दातरि ॥ शूरे ॥ वर्जन
शीले ॥ सात्त्विकत्यागेनयुक्ते ॥ न
द्वेष्ट्यकुशल कर्म कुशलेनानुसज्ज
ते । त्यागी सत्त्वसमाविष्टो मेधावी
छिन्नसशय ॥ नहि देहभृता शक्य
त्यक्तु कर्माण्यशेषत. । यस्तुकर्मफ
लत्यागी सत्यागीत्यभिधीयते ॥

त्यजति तच्छील । सम्पृचानुरुधे तिघिनुण् ॥

त्यागिम । त्रि । त्यागजे ॥ त्यागेन निर्वृत्त । भावप्रत्ययान्तादिमप् ॥

त्याजित । त्रि । विसर्जिते ॥ त्यजेर्ण्यन्तात् द्विकर्मकात् कर्मणिक्त । ण्यन्ते कर्त्तुश्च कर्मणामित्युक्ते ॥

त्याज्य । त्रि । त्यागयोग्ये । वर्जनीये । वर्ज्ये ॥ तीरे प्रतिग्रहस्त्याज्यो त्याज्योधर्मस्य विक्रय ॥ अपिच । पितृव्रतिशयमत्र शोधित वाप्यशोधितम् । त्याज्यो भवति कैाना दण्डनीयो ऽपिभूभृत इति ॥ त्यजेश्चेति ण्यति कवर्गादेशाभाव ॥

त्रङ्ग । पु । प्रतिमार्गे ॥

त्रङ्गा । स्त्री । प्रतिमार्गे । उत्रङ्गे ॥

त्रप । पु । सलज्जे ॥ त्रपते । त्रपूष् लज्जायाम् । षित्त्वादङ् ॥

त्रपा । स्त्री । लज्जायाम् ॥ कुलटायाम् ॥ त्रपते ऽनया । त्रपूष्० । षिद्भिदादिभ्योङ् । टाप् ॥ कुले ॥ कीर्त्तौ ॥ इति शब्दरत्नावली ॥

त्रपाक । पु । म्लेच्छविशेषे ॥

त्रपारण्डा । स्त्री । वेश्यायाम् ॥

त्रपिष्ठ । त्रि । तृप्रतमे ॥ अयमेषामतिशयेनतृप्र । अतिशायने इष्ठन् । प्रियस्थिरेति तृप्रस्यत्रबादेश ॥

त्रपीयान् । त्रि । तृप्रतरे ॥ अतिशयेन तृप्र । द्विवचनविभज्येति ईयसुन् ॥ प्रियस्थिरेति तृप्रस्यत्रबादेश ॥

त्रपु । न । सीसके ॥ रङ्गे ॥ अग्निदृष्ट्वा त्रपते लज्जतइव । त्रपूष०। शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिवन्धिमनिभ्यश्चेत्युः ॥

त्रपुकर्कटी । स्त्री । त्रपुष्याम् ॥

त्रपुटी । स्त्री । सूक्ष्मैलायाम् ॥ इ०रत्०॥

त्रपुल्लम् । न । रङ्गे । राँग इति भाषा ॥

त्रपुषम् । न । कर्कटीप्रभेदे । सुधावासे । सुशीतले । लघुखीरा वालनखीरा इत्यादिभाषा ॥ त्रपुष लघु नीलञ्च नव तृट्क्लमदाहजित् । स्वादुपित्तापह शीत रक्तपित्तहरं परम् ॥ तत् पक्व मम्लमुष्णस्यात् पित्तल कफवातनुत् । तद्बीजन्मूत्रल शीत रूक्ष पित्तास्रकृच्छ्रजित् ॥

त्रपुषी । स्त्री । कर्कव्याम् । खीरा इति भाषा ॥

त्रपुष । न । } रङ्गे ॥
त्रपुसम् । न । }

त्रपुसी । स्त्री । महेन्द्रवारुण्याम् ॥ कर्कट्याम् ॥ लताविशेषे । पीतपुष्पायाम् । खीरा इति भाषा ॥

त्रयम् । न । त्रितये ॥ त्रयो ऽवयवा अस्य । सङ्ख्यायाअवयवेतयप् । द्वि

त्रिभ्यांतयत्तायज्वा ॥

त्रयी । स्त्री । त्रिवेदाम् । ऋग्यजु साम्ना ख्यश्रुतित्रये ॥ ब्रह्माऽथपुरुषो रुद्र स्त्रयमेतत् त्रयीमयम् । सर्गादावृ ग्मयोब्रह्मा स्थितौविष्णुर्यजुर्मय । रुद्र'साममयोऽन्ताय तस्मात् तस्या शुचिर्ध्वनि ॥ पुरन्ध्याम् ॥ सुमतौ ॥ सोमराजीवृक्षे ॥ भवान्याम् । दुर्गा याम् ॥ यथा । ऋग्यजु.साम भागेन साङ्गवेदगतापिया । त्रयीति पव्यते लोकेदृष्टादृष्टार्थसाधिनीति देवी पुराणम् ॥ त्रितये ॥ टिड्ढेतिङीप् ॥

त्रयीतनु' । पु । सूर्ये ॥ त्रयी तनुर्य स्य ॥

त्रयीधर्म्म । पु । त्रय्या विधीयमाने ज्यो तिष्टोमादिकर्मणि ॥ त्रय्या धर्म त्र यीधर्म ॥

त्रयीमुख. । पु । ब्राह्मणे ॥ त्रयी मुखे यस्य ॥

त्रयोदश । त्रि । त्रयोदशानाम्पूरणे ॥ तस्यपूरणेडट् ॥

त्रयोदश । त्रि । सङ्ख्याविशेषे १३ । ते रह इति भाषा ॥ सङ्ख्येये ॥ त्रय श्च दश च । त्र्यधिकादशेति वा । त्रे स्त्रय इतित्रयस् । त्त्रोत्वगुणा ॥

त्रयोदशी । स्त्री । तिथिविशेषे ॥ सा चन्द्रस्य त्रयोदशकलाक्रियारूपा च योदशकलाक्रियावच्छिन्नकालरूपा वेति तिथ्यादितत्त्वम् ॥ रूपान्वित सात्त्विकभावहीन सुखीचवाल्ये ज ननीप्रियश्च । सदालस शिल्पगुणै कवेत्ता त्रयोदशी जन्मतिथिर्यदि स्यात् ॥

त्रय्यात्मा । पु । सूर्ये ॥ त्रयीआत्मास्व रूपंयस्य ॥

त्रसम् । न । वने ॥ त्रि । जङ्गमे ॥ त्रस ति । त्रसीउद्वेगे । पचाद्यच् ॥

त्रसन । त्रि । सन्त्रासयुक्ते ॥

त्रसर । पु । तन्तुवायोपकरणविशेषे । सूत्रवेष्टने । तासनी इति गौडभा षा ॥ त्रसनम् । त्रसी० । अरन् ॥

त्रसरेणु । पु । परमाणुषट्के । सयु क्तद्व्यणुकत्रये ॥ जालान्तरगतेभानौ यत्सूक्ष्म दृश्यते रज । प्रथम तत् प्रमाणाना त्रसरेणु प्रचक्षते ॥ वैद्य कपरिभाषया त्रिंशत् परमाणुप रिमाणे । ध्वसाम् ॥ यथा । जाला न्तरगतेसूर्यकरे ध्वसीविलोक्यते । त्रसरेणुस्तु विज्ञेय स्त्रिंशता परमाणु भिरिति ॥ स्त्री । सूर्यपत्न्याम् ॥

त्रस्त । त्रि । भीते ॥ चकिते ॥ न । शीघ्रे ॥

त्रसु । त्रि । चासशीले । भीरौ ॥ त्रस्य ति । त्रसी० । त्रसिगृधिधृषिक्षिपे

क्रु । नेड्वशीतिनेट् ॥

त्राणम् । न । त्रायमाणायामोषधौ ॥ र क्षणे ॥ त्रि । रक्षिते ॥ त्रायतेल्युट् । त्रैङ् पालने । क्त । नुदविदेति पक्षेनत्वम् ॥ रक्षके ॥ त्रायते । कर्त्तरिल्युटवा ॥

त्राणा । स्त्री । त्रायमाणाय म् ॥

त्रात । । रक्षिते ॥ त्रायतेक्त । त्रै । नुदविदोन्दत्राघ्राह्रीभ्यो न्यतर,'ामितिपक्षेनत्वाभाव ॥

त्राता । त्रि । पालयितरि ॥ त्रायते । त्रैङ्०। तृच् ॥

त्रान्त । पु । त्रावसाने शब्दे ॥ त्रोन्तेय स्य । यथा । यावान् कश्चित् त्रान्त शब्दोऽय नपुसकेतु बोद्धव्य ॥ यथा । पत्रच्छत्रचमित्रकलत्रादयो न- पुसका पठ्यन्ते ॥

त्रापुषम् । त्रि । त्रपुणोविकारे ॥ त्रपुज तुनो षुगित्यण् ॥

त्रायन्ती । स्त्री । वार्षिके । त्रायमाणा याम् । बलभद्रिकायाम् ॥ त्राणचा । सपदादित्वात् क्विप् । त्राम् अयति । इगतौ । शतृप्रत्यय । उगितश्चे तिङीप् ॥ त्रायन्ती तुवरा तिक्ता सरा पित्तकफापहा । ज्वरहृद्रोगगु ल्मास्त्रभ्रमशूलविषप्रणुत् ॥

त्रायमाणा । त्रि । रक्ष्यमाणे ॥

त्रायमाणा । स्त्री । बला इति बहुला याम् । वार्षिकैाषधौ । त्रायन्त्या म् ॥ अस्यागुणा यथा । शीतस्वम धुरश्च गुल्मज्वरकफास्त्रभ्रमतृष्णा क्षयग्लानिविषच्छर्दिविनाशिन्यमि तिराजनिर्घण्ट ॥ त्रायते । त्रैङ्०। शानच् त्रानश् वा ॥

इतिच गौडभाषाप्रसिद्धायां देवब

त्रास । पु । भये ॥ त्रसोउद्वेगे । घञ् ॥ भयोद्वेगे ॥

त्रासजिह्म । त्रि । भयक्लिष्टे ॥ त्रासेन जिह्म ॥

त्रासदायी । त्रि । भयदातरि । शङ्करे ॥ इति हेमचन्द्र ॥

त्रासन । त्रि । भयावहे ॥

त्रय । पु । त्रिसङ्ख्यायाम् । तीनइति भाषा ॥ त्रि । सङ्ख्येये । त्रिसङ्ख्या विशिष्टे ॥ यथा त्रयोदेवा नतुदेवा नांत्रय ॥ तरति । तॄ० । तरतेड्रिः । त्रय त्रीन् त्रिभ्यइत्यादिरूपाणि ॥ तिस्रोभार्या स्त्रियालास्त्रयोभृत्या श्च वान्धवा । भुवेदविरुद्धाश्च नद्यो ते मङ्गलप्रदा. इतिब्रह्मवैवर्त्तपुरा णम् ॥

त्रिश । त्रि । त्रिंशत्तमे । तीसवाँ इति भाषा ॥ त्रिंशत पूरण । तस्यपूरणे डट् ॥

त्रिंशक: । त्रि । त्रिंशद्भि:क्रीते ॥ त्रिश

तिचित्रद्दर्शाङ्कुत्रसम्नायामित्यस्तं न्यायामार्थीयेष्वर्थेषु डुवुन् । टि लोप ॥

त्रिंशत् । स्त्री । सङ्ख्याविशेषे । तीस इतिभाषा ॥ सङ्ख्येये ॥ चयोदश त परिमाणमस्य । पङ्क्ति विंशति त्रिंशच्चत्वारिंशद्दितिनिपातनात् प्र कृतेस्त्रिन् भाव श्चप्रत्यय ॥

त्रिंशत्पत्रम् । न । कुमुदे । कैरवे ॥ त्रिंश त्सङ्ख्यकानिपत्राणि यस्मिन् तत् ॥

त्रिंशांश । पु । रात्र्यन्तत्रिंशद्दशे ॥ यथा । पञ्चपञ्चाष्ठद्विवाणा त्रिषमेत्रिंशद्दश का । माहेयशनिजीवज्ञशुक्राणां व्यु त्क्रमात्समे ॥ विषमराशौ कुज- शनिगुरुबुधशुक्राणां पञ्चपञ्चाष्टसप्त पञ्चमितास्त्रिंशद्दशका क्रमात्ज्ञेया । समराशौ व्युत्क्रमात तेषां विपर्यये णत्रिंशांशाज्ञेया ॥ यथा मेषोविष मराशि तच प्रथमावधिपञ्चांशा भौ मस्य । षष्ठांशमारभ्य दशमांशपर्य न्त पञ्चांश शने । एकादशांशमा रभ्याष्टादशांशपर्यन्तमष्टावंशागुरो । ऊनविंशांशमारभ्य पञ्च त्रिंशांश- पर्यन्त सप्तांशाबुधस्य । तत षड्विंशा शमारभ्य त्रिंशांशपर्यन्त पञ्चांशा शुक्रस्य त्रिंशांशा क्रमात्ज्ञेया. । मि थुनसिंहतुलाधनु कुम्भेष्वप्येवम् ॥ समराशौ व्युत्क्रमाद्यथा । वृषेप्रथ मांशमारभ्य पञ्चांशाभृगो । ततो दादशांशपर्यन्तं सप्तांशाबुधस्य । त तोविंशांशपर्यन्त अष्टावंशागुरो । त त. पञ्चविंशांशपर्यन्त पञ्चांशा शने । ततस्त्रिंशद्दशपर्यन्त पञ्चांशा कुज स्य त्रिंशांशा ॥ एवंकर्कट गावृश्चिक- कामकरमीनेष्वपिबोध्या

त्रिकम् । न । पृष्ठाधरे । पृष्ठव ंधोभागे । कटिभागे ॥ त्रये ॥ त्रिपथसंस्थाने ॥ त्रिफलायाम् ॥ त्रिकटौ ॥ त्रिम दे ॥ यथा । गुडूचीसारसयुक्तात् त्रि कत्रयसमन्वयात् । वातरक्तं निह- न्त्याशु सर्वरोगहरन्त्वय ॥ त्रयाणां सङ्घ । सङ्ख्याया सञ्ज्ञासङ्घसूत्रा ध्ययनेष्वितिकन् ॥ तृतीयके ॥ तृ तीयेनरूपेण ग्रहणं ग्रन्थस्य । तावति थं ग्रहणमितिलुग्वेति कन् पूरण प्र त्ययस्य वालुक् ॥ पु । गोक्षुरे ॥

त्रिककुत् । पु । त्रिकूटाचले ॥ त्रीणि ककुत् सदृशानि शृङ्गाण्यस्य ॥

त्रिककुद्धामा । पु । विष्णौ ॥ ऊर्द्ध्वाधो मध्याभेदेन तिसृणां ककुभां धाम आश्रयोय. ॥ तिसृणा ककुभादिशा समाहार इतिविग्रहे तद्धितार्थोत्त रपदसमाहारेचेति समाहारे द्विगु रेकवचनमित्येकवद्भावे समासान्त-

कमितिनपुंसकत्वेन त्रिककुप् तस्य धाम अधिष्ठानं प्रकाशो वेति । इदञ्च समासात्मकमेकनाम । त्रिककुंभामितिभाष्यं न विग्रहप्रदर्शकं किन्तुफलितार्थकथनम् ॥

त्रिकट । पु । गोक्षुरके ॥

त्रिकटु । न । कटुत्रिके । त्र्यूषणे । व्योषे ॥ विश्वोपकुल्यामरिच त्रय त्रिकटुकथ्यते ॥ त्र्यूषणं दीपनं हन्ति श्वासकासत्वगामयान् । गुल्ममेहकफस्थौल्यमेदः श्लीपदपीनसान् ॥ त्रयाणां कटूनां मरिचशुण्ठिपिप्पलीनां समाहारः ॥

त्रिकण्ट । पु । गोक्षुरके ॥ मद्गुरे । क्षुद्रीप्रभेदे । तिकांटा थूहर इतिभाषा ॥ टेङ्गरा इतिगौडप्रसिद्धे मत्स्ये ॥ न । कण्टकत्रये । मिलित गुडूच्यश्मिदमनी दुस्पर्शात्रयरूपे ॥ त्रीणि कण्टकानि यस्य यस्मिन्वा ॥

त्रिकण्टक । पु । गोक्षुरकवृक्षे ॥ मद्गुर्गमत्स्ये ॥

त्रिकर्मकृत् । पु । इज्याध्ययनदानानां कर्त्तरि ॥

त्रिकशूलम् । न । वातजन्यव्यथाविशेषे ॥ स्फिगस्थ्नो पृष्ठवंशास्थ्नो य सन्धिस्तत्त्रिक स्मृतम् । तत्र वातेन या पीडा त्रिकशूलं तदुच्यते ॥

त्रिका । स्त्री । कूपस्यनेमौ । कूपस्यान्ते रज्ज्वादिधारणयन्त्रे ॥ तिस्रोऽस्त्रयोऽस्याः । सङ्ख्यायाः सत्रासङ्घसूत्राध्ययनेष्विति कन् ॥

त्रिकाय । पु । सुगते ॥ त्रय कायाअस्य ॥

त्रिकार्षिकम् । न । मिलितनागराऽतिविषामुस्तात्रयरूपे ॥

त्रिकालम् । न । कार्यकालतत्पूर्वापरकालेषु ॥

त्रिकालज्ञ । त्रि सर्वज्ञे ॥ पु । बुद्धे ॥ त्रिकालं जानाति । ज्ञा० । आतइति क ॥

त्रिकालदर्शी । पु । मुनौ ॥ त्रि । सर्वज्ञे । भूतभविष्यद्वर्त्तमानवेत्तरि ॥ त्रिकालं पश्यति । दृशिर्० । ग्रह्यादित्वाण्णिनि ॥

त्रिकालवित् । पु । बुद्धे ॥ त्रि । त्रिकालज्ञे ॥ त्रिकालं वेत्ति । विद्० । क्विप् ॥

त्रिकूट । पु । त्रिककुत्पर्वते । लङ्कापुराधारे । सुवेले ॥ क्षीरोदार्णवतीरवर्त्तिनिशैलविशेषे । यत्र गजेन्द्रो गरुडगामिना श्रीनारायणेनोद्धृत । अस्य वर्णनं वामनपुराणे द्रष्टव्यम् ॥ न । सामुद्रलवणे ॥

त्रिकूटपर्वत । पु । तीर्थविशेषे ॥

त्रिकूटलवणम् । न । द्रौणीलवणे ॥

त्रिकोणम् । न । लग्नात् नवमपञ्चमस्थानयोः ॥ योनौ ॥ कामरूपपीठे ॥ करतोयां समारभ्य यावद्दिक्करवासिनी । शतयोजनविस्तारं त्रिकोणं सर्वसिद्धिदम् ॥ त्रि । त्र्यस्रे ॥

त्रिकोणफलम् । न । शृङ्गाटके ॥

त्रिक्षारम् । न । क्षारत्रये ॥

त्रिक्षुर । पु । कोकिलाक्षवृक्षे ॥

त्रिखम् । न । त्रपुषे ॥

त्रिखट्वम् । न । खट्वात्रये ॥ तिसृणां खट्वानां समाहारः ॥

त्रिखट्वी । स्त्री । त्रिखट्वे ॥ द्विगोरिति ङीप् ॥

त्रिगङ्गम् । न । तीर्थविशेषे ॥

त्रिगण । पु । त्रिवर्गे ॥ त्रयाणां धर्मार्थकामानां गणः ॥

त्रिगर्त्त । पु । सुशर्माख्यनृपतेर्देशे । जालन्धरे ॥ तद्देशजे त्रिगर्त्ताः ॥ गणितान्तरे ॥

त्रिगर्त्तक । पु । त्रिगर्त्ते ॥ त्रिगर्त्त एव । स्वार्थे कः ॥

त्रिगर्त्ता । स्त्री । कामुकाङ्गनायाम् ॥ घुर्घुरिकायाम् ॥

त्रिगुणम् । न । प्रधाने ॥ प्रकृतौ ॥ त्रयो गुणाः सुखदुःखमोहाः अस्येति व्युत्पत्तेः । तदनेन सुखादीनामात्मगुणत्वं पराभिमतं पराकृतं भवति ॥



व्यक्ते ॥ सत्त्वरजस्तमःसु ॥ त्रयाणां गुणानां समाहारः ॥ त्रि । गुणत्रययुक्ते ॥

त्रिगुणा । स्त्री । तुल्यगुणत्रयात्मिकायां प्रकृतौ ॥

त्रिगुणाकृतम् । न । त्रिहल्ये । त्रिकृष्टक्षेत्रे ॥ त्रिगुणाकृतम् । सङ्ख्यायाश्च गुणान्तायाः इति डाच् ॥

त्रिगुणात्मकम् । न । अज्ञाने ॥ गुणाः लोहितशुक्लकृष्णाः अज्ञानकार्येषु तेजोवन्नेष्वान्तरप्रकृतिषु श्रुतिप्रसिद्धाः । तथा च कार्यगतत्रिरूपेण कारणमप्यज्ञानमव्याकृतात्मकत्रिरूपेण त्रिगुणात्मकम् । यद्वा रजःसत्त्वतमोलक्षणास्त्रयोगुणाः तद्युक्तमज्ञानं गुणगुणिनोरभेदविवक्षया त्रिगुणात्मकं भवति ॥ त्रयो गुणा आत्मानो यस्य ॥

त्रिगुणित । त्रि । त्रिरावृत्तकृते ॥

त्रिजटा । स्त्री । राक्षसीविशेषे ॥ सीतापक्षपातिनीय रावणालये ॥ विल्ववृक्षे ॥

त्रिजातम् । न । समानतया मिलिते षुत्वगेलापत्रेषु ॥ यथा । एलादिभिरुद्दिष्टं त्रिजातं त्रिसुगन्धिकम् । चतुर्जातं सनागन्तु दयवातकफापहमिति ॥

त्रिजातकम् । न । त्रिसुगन्धौ । तुल्येषु त्वगेलापत्रकेषु ॥ एतच्च रोचनं रूक्ष तीक्ष्णोष्णं मुखगन्धहृत् । लघु पित्ताग्निकृद्वर्ण्यं कफवातविषापहम् ॥ त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम् । नागकेशरसंयुक्तं चातुर्जातक मुच्यते ॥

त्रिणता । स्त्री । धनुषि ॥ त्रिषु स्थानेषु नता । पूर्वपदादिति णत्वम् ॥ टाप्त्वे ॥

त्रिणाचिकेत । पु । अध्वर्युव्रते ॥ तद्योगात् पुरुषे ॥ त्रिः कृत्वो नाचिकेतोऽग्निश्चितो येन तस्मिन् ॥ तद्विज्ञान स्तदध्ययन स्तदनुष्ठानवान् वा यस्तस्मिन् ॥

त्रिणेत्र । पु । त्र्यम्बके । हरे ॥ त्रि । नेत्रत्रयविशिष्टे ॥ त्रीणि नेत्राणि यस्य । पूर्वपदात् संज्ञायामग इति गिरिनद्यादीनां वेति वा णत्वम् ॥

त्रितक्षम् । न । तक्ष्णां त्रये ॥ त्रयाणां तक्ष्णां समाहारः ॥

त्रितयम् । न । त्रये ॥ त्रयोऽवयवा अस्य । सङ्ख्याया अवयवे तयप् ॥

त्रिदण्डम् । न । चतुरङ्गुलगोवालवेष्टनाद्न्योन्यसम्बन्धे यतेर्दण्डविशेषे ॥ पु । सन्न्यासाश्रमे ॥ यथा । यस्त्वसंयतषड्वर्गः प्रचण्डेन्द्रियसारथिः । ज्ञानवैराग्यरहित स्त्रिदण्ड मुपजीवतीति विष्णुभागवतम् ॥ त्रयाणां दण्डानां समाहारः ॥ त्रिदण्डमस्त्यस्य । अच् ॥

त्रिदण्डी । पु । त्रिदण्डधारिणि सन्न्यासिविशेषे ॥ वाङ्मनःकायानां नियुद्धाभिधानासतङ्कल्पप्रतिषिद्धव्यापारत्यागवति ॥ यथा हमनुः । वाग्दण्डोऽथ मनोदण्डः कायदण्ड स्तथैव च । यस्यैते निहिता बुद्धौ त्रिदण्डीति स उच्यते इति ॥ त्रिदण्डमस्यास्ति । इनि ॥

त्रिदला । स्त्री । गोधापदीलतायाम् ॥

त्रिदलिका । स्त्री । चर्मकषायाम् ॥ इति शब्दचन्द्रिका ॥

त्रिदश । पु । देवे । निर्जरे ॥ तृतीया यौवनाख्या दशा यस्य सः । त्रिशब्दस्तृतीयार्थता त्रिविभागवत् । त्रिदशयोः सङ्ख्याव्ययेति बहुव्रीहि । बहुव्रीहौ सङ्ख्येये डजबहुगणात् इति डच् ॥ त्रीन् तापान् दशति । दंश दशने । मूलविभुजादित्वात् क । पृ॰नलोप इति वा ॥ जन्मसत्ताविनाशाख्या स्तिस्रो दशा यस्य । नतु मर्त्यानामिव बाल्ययौवनवार्द्धक्याख्या ॥ त्रयस्त्रिंशद्देवमुख्यगणे ॥ त्र्यधिका त्रिंशत् त्रयस्त्रिंशत् त्रिदशा । अधिकार्थ शब्दपार्थात्त्रभावेनैकार्थीभाव । ते च अर्कादादश रुद्राएकादश वसवोऽष्टौ विश्वेदेवौ द्वाविति ॥ एकएवचि

शब्दस्तन्त्रेणोभयार्थे द्वतित्त्वताधिका
रात्रिदशाद्दृत्यवद्व्याख्यात.॥

त्रिदशगोप । पु । इन्द्रगोपकीटे ॥

त्रिदशदीर्घिका । स्त्री । स्वर्गङ्गायाम् ॥

त्रिदशमञ्जरी । स्त्री । तुलस्याम् ॥

त्रिदशवर्त्म । न । नभसि ॥ त्रिदशानां वर्त्म॥

त्रिदशाचार्य्य । पु ।जीवे।सुरगुरौ ॥ त्रिदशानाम् आचार्य. ॥

त्रिदशाधिप । पु । शक्रे ॥

त्रिदशाध्यक्ष । पु। विष्णौ॥ गुणावेशेन सञ्जातानां तिसृणां दशानां जाग्रदादीना मध्यक्ष स्वामी ॥ त्रिदशानां देवानां वा अध्यक्ष ॥

त्रिदशायुधम् । न । वज्रे ॥

त्रिदशारि । पु । दैत्ये॥ त्रिदशानाम् अरि. ॥

त्रिदशालय । पु।स्वर्लोके॥ त्रिदशानाम् आलय ॥ सुमेरुपर्वते ॥

त्रिदशावास । पु । त्रिविष्टपे।स्वर्गे ॥ त्रिदशानाम् आवास ॥

त्रिदशाहार । पु । अमृते।पीयूषे ॥

त्रिदशेश्वरी । स्त्री । दुर्गायाम्॥

त्रिदालिका । स्त्री । चर्मकषायाम् ॥

त्रिदिनव्रतम् । न। नैमित्तिकेव्रतविशेषे॥ यथा।खरकुक्कुटकोलांश्च विक्रीणन्नोद्विजातय । नीचहर्ति चरन्तो पिशुद्ध्येयु स्त्रिदिनव्रतात् ॥ दिनमेक निराहारो द्वितीय कणभोजन । तृतीयन्तु नयेदह्नि स्त्रिदिनव्रतम मित्येकेऽतिकृच्छ्रार्थंवसेत् ॥

त्रिदिनस्पृक् । पु । त्र्यहस्पर्शे। अह्नस्त्रिविषयस्पर्शने ॥ यथा । त्रिदिनस्पृक् दिनत्रयस्पर्शनादह्न । तथाहोरात्रस्य वारद्वयेन तिथ्यन्तद्वयदृष्टि-स्पृश्यते तदा त्रिदिनस्पृक् स्यादित्यर्थ ॥

त्रिदिव. । पुं । स्वर्गे ॥ त्रयोब्रह्मविष्णुरुद्रा दीव्यन्त्यत्रेति त्रिदिव । बहुलग्रहणादिति घञ् । सञ्ज्ञापूर्वकत्वान्नगुण. ॥ यद्वा । सात्त्विकराजसतामसभेदेन त्रिविधा दीव्यन्ति व्यवहरन्ति प्रकाशन्ते वा । इगुपधत्वात्क ॥ यद्वा तृतीयायौ । घञर्थेकविधानम् । वृत्तिविषये सङ्ख्याशब्दस्य पूरणार्थत्वम् ॥ न । खे । नभसि ॥ सुखे ॥

त्रिदिवा । स्त्री । नदीविशेषे ॥

त्रिदिवेश । पु । देवे । निर्जरे ॥ त्रिदिवस्य ईश ॥

त्रिदिवोद्भवा । स्त्री । स्थूलैलायाम् ॥

त्रिदिवौका । पु । देवे । सुरे ॥

त्रिदृक् । पु । शिवे । महादेवे ॥ त्रि । त्रिनेत्रे ॥

त्रिदोष: । पु । सन्निपाते ॥ न । वात-

पित्तकफरूपे दोषत्रये ॥

त्रिदोषज । पु । त्रिदोषजनिते सन्नि पातरोगे ॥ अस्य पूर्वरूपम् । सर्वलिङ्गसमावाय सर्वदोषप्रकोपजे ॥ सर्वदोषप्रकोपजे पूर्वसर्वलिङ्गसमावाय । कृतिश्रयितजृम्भानेत्रदाहाश्च रुचिसहितानां श्रमादीनां समवायो भवति ॥ * ॥ त्रिरज्वरे वातकफोल्वणे वा त्रिदोषजे वा दशमूलमिश्र । किराततिक्तादिगण प्रयोज्य शुद्धार्थिने वा त्रिवृतादिमिश्र ॥

त्रिधा । अ । त्रिप्रकारे ॥ यथा । त्रिधा करोति ॥

त्रिधातु । पु । गणेशे ॥ न । धातुत्रये ॥

त्रिधामा । पु । विष्णौ ॥ शिवे ॥ अग्नौ ॥ मृत्यौ ॥ त्रीणिधामानि स्थानानि भूरादीनि सत्त्वादीनि वा यस्य स. ॥ न । स्त्री । धामत्रये ॥

त्रिधारक । पु । गुण्डतृणे ॥

त्रिधारस्नुही । स्त्री । त्र्यस्रे । स्नुहीविशेषे ॥

त्रिधाविशेष । पु । सूक्ष्मादिविशेषे ॥ यथा । सूक्ष्मामातापितृजा सहप्रभूतै स्त्रिधाविशेषाः स्युः । सूक्ष्मास्तेषां नियता मातापितृजानिवर्त्तन्त ॥ सूक्ष्मशरीरमेक मातापितृजोद्वितीयं महाभूतानितृतीयोविशेष । तेषांमध्ये सूक्ष्मानियता माता पितृजानिवर्त्तन्ते कीटान्ता वा भस्मान्ता वा विडन्ता वेति ॥ त्रिप्रकारको विशेष ॥

त्रिधासर्ग । पु । भूतादिसर्गे ॥ अष्टविकल्पोदैव स्तैर्यग्योनश्चपञ्चधाभवति । मानुष्यश्चैकविध समासतोयं त्रिधासर्गः ॥ ब्राह्मं प्राजापत्यं ऐन्द्रं पैत्रं गान्धर्व याक्षं राक्षसं पैशाचं इत्यष्टविकल्पोदैव सर्ग । १ ॥ पशुमृगपक्षिसरीसृपस्थावरा इतिपञ्चविधस्तैर्यग्योनं सर्ग । २ ॥ मानुष्यश्चैकविध । ३ ॥ ब्राह्मणत्वाद्यवान्तरजातिभेदाविवक्षया संस्थानस्य चतुर्ष्वपिवर्णेष्वविशेषात् ॥

त्रिनयन । पु । विषमनयने । शिवे ॥ त्रीणिनयनान्यस्य । क्षुभ्नादिषु चेति निषेधात् पूर्वपदात् संज्ञायामग इति णत्वाभाव ॥ त्रि । नेत्रत्रयवति ॥

त्रिनयना । स्त्री । उमायाम् ॥ टाप् ॥

त्रिनेत्र । पु । शिवे । हरे ॥ त्रीणिनेत्राणियस्य ॥ त्रि । नेत्रत्रयविशिष्टे ॥

त्रिनेत्रचूडामणि । पुं । शशाङ्के । चन्द्रे ॥

त्रिनेत्रा । स्त्री । वाराहीकन्दे ॥ नेत्रत्रययुक्तायाम् ॥

त्रिपञ्च । त्रि । त्रिगुणितपञ्चसु । पञ्च

दशसु ॥

त्रिपथ्याङ्गम । न । पञ्च दशसङ्ख्याक ङ्गेषु निदिध्यासनाङ्गसाधकसाधन- विशेषेषु ॥ तानि यथा । यमोहि- नियम स्त्यागो मौन देशश्च काल ता । आसन मूलबन्धश्च देहसाम्य ञ्च दृक्स्थिति ॥ प्राणसंयमनञ्चैव प्रत्याहारश्चधारणा । आत्मध्यान स माधिश्च प्रोक्तान्यङ्गानिवैक्रमात् ॥ एषातुलक्षणा स्वस्वस्थानेच्चेय मनी- षिभि ॥

त्रिपताकम । न । रेखात्रयाङ्कितभाले॥

त्रिपत्र । पु । विल्वे ॥ न । दलत्रयवति विल्वपत्रे ॥ यथा । विष्णुरुवाच । ऊर्द्ध पत्रहरोत्तेय पत्र वामविधि स्वयम् । अहदच्चिणपत्रञ्चत्रिपत्रदलमित्यु तेतिहहद्धर्मपुराणे ११ अध्याय ॥

त्रिपत्रक । पु । किंशुकवृच्चे । पलाशे॥

त्रिपत्री । स्त्री । पत्रत्रये ॥ द्विगोरिति ङीप् ॥

त्रिपथम् । न । त्रिमार्ग्याम् ॥ त्रयाणा पथा समाहार । तद्धितार्थेतिसमा स । ऋक्पूरिति समासान्त । पथ सङ्ख्याव्ययादेरितिक्लीवता ॥

त्रिपथगा । स्त्री । भागीरथ्याम् । गङ्गा याम् ॥ त्रीन्पथोगच्छति । त्रिभि प थिभिर्गच्छतिवा । गम्लृ॰ । अन्येष्वो पीतिड ॥ यद्वा । त्रिपथेन गच्छति । ड. ॥ टाप् ॥ चितौतारयते मर्त्त्या न् नागाँस्तारयतेप्यध । दिवितारय तेदेवाँ स्तेनत्रिपथगास्मृता ॥

त्रिपदा । स्त्री । ऋग्विशेषे ॥ त्रय. पा दा अस्या । सङ्ख्यासुपूर्वस्येति पा दस्यान्त्यलोप । टाद्यचीतिटापि भ त्वात् पाद पत् ॥ हसपदीवृच्चे ॥

त्रिपदिका । स्त्री । तिपाई इति प्रसिद्धे आधारविशेषे ॥ अर्घ्यार्थधातुनिर्मिते त्रिपाद्युक्ते शङ्खादिपात्राधारे ॥

त्रिपदी । स्त्री । गोधापदीलतायाम् । हसपद्याम् ॥ हस्तिगात्रबन्धे ॥ त्रि पदी पादबन्धनमितियादव ॥ अ र्घ्यादिपात्राधारे ॥ त्रय पादाअस्या सङ्ख्यासुपूर्वस्येति पादशब्दस्यान्त्य लोप । पादोन्यतरस्यामितिङीपि भत्वात् पाद पदिति पद्भाव' ॥ पा दत्रययुक्तायाम् ॥ भाषाकवितायां छन्दोविशेषे । यथा । पञ्चकृटिका न्ता यदियमकान्ता द्वादशपरिणत- मात्रा । किन्नरगीतिस्तदितिनिवी ति स्यार्द्धसमाचरणात्रा ॥ स्यपादा न्तउदाहृत ॥ सैषा सङ्गीतकेनि त्य निर्वीति किन्नराख्यिका ॥ सैव स्यात् प्राकृतेगाने त्रपदीतिपरिश्रु ता ॥ इतिकाव्योदय ॥

त्रिपर्ण । पु । किंशुके ॥

त्रिपर्णा । स्त्री । वनकार्पासाम् ॥

त्रिपर्णिका । स्त्री । कन्दविशेषे । अग्लवल्ल्याम् । कन्दालौ ॥

त्रिपर्णी । स्त्री । शालपर्ण्याम् ॥ वनकार्पास्याम् ॥ पृश्निपर्णीभेदे ॥

त्रिपात् द् । पु । विष्णौ ॥ ज्वरे ॥ त्रयः पादा अस्य । सख्यासुपूर्वस्येतिपादस्यान्त्यलोपः ॥

त्रिपादिका । स्त्री । हंसपदीलतायाम् ॥

त्रिपिबन् । पु । वार्ध्रीणसे ॥ नद्यादौ पयः पिबतोयस्य त्रीणिजलं स्पृशन्ति कर्णौजिह्वा च । त्रिभिः पिबति । पा० । शत्रु ॥

त्रिपिष्टपम् । न । स्वर्गे ॥ त्रिदशानापिष्टपम् । पृषोदरादित्वाद् दशशब्दलोपः ॥ तृतीयं पिष्टपम् त्रिपिष्टपम् । पूरणप्रत्ययस्तु वृत्तौ गतार्थत्वान्न प्रयुज्यते त्रिभागवत् । मर्त्यपातालापेक्षया तृतीयं पिष्टपं भुवनम् ॥

त्रिपिष्टपसद् । पु । देवतायाम् ॥ त्रिपिष्टपेदिवि सीदतिवर्त्तते । षद्लृ० । क्किप् ॥

त्रिपुट । पु । सतीनके । खिसारीति प्रसिद्धे कलाये ॥ त्रिपुटोमधुरःस्निग्धस्तुवरोरूक्षणो भृशम् । कफपित्तहरोरुच्योग्राहकः शीतलस्तथा ॥ किञ्चित्खञ्जत्वपङ्गुत्वकारी वातातिकोपनः ॥ तीरे ॥ तालके ॥ हस्तभेदे ॥ गोक्षुरे ॥

त्रिपुटा । स्त्री । मल्लिकायाम् ॥ सूक्ष्मैलायाम् ॥ त्रिवृदोषधौ ॥ त्रयः पुटा यस्याः ॥ कर्णस्फोटायाम् ॥ रक्तत्रिवृति ॥ स्थूलैलायाम् ॥ देवीविशेषे ॥

त्रिपुटी । पु । एरण्डे ॥

त्रिपुटी । स्त्री । त्रिवृतायाम् ॥ त्रयःणां पुटाना समाहारे ॥ त्रयाणां ज्ञातृज्ञानज्ञेयादिरूपाणां पुटानामाकाराणां समाहारः । द्विगोरिति ङीप् ॥

त्रिपुटीफल । पु । एरण्डे ॥ त्रिपुटीफले यस्य ॥

त्रिपुण्ड्रम् । न । भालस्थतिर्यग्रेखात्रितये ॥ ऊर्ध्वपुण्ड्रं द्विजः कुर्यात् क्षत्रियस्त्रिपुण्ड्रकम् । अर्द्धचन्द्रन्तु वैश्यस्य वर्त्तुलं शूद्रयोनिजः ॥ * ॥ विनाभस्मत्रिपुण्ड्रेण विनारुद्राक्षमालया । पूजितोपिमहादेवो न स्यात्तस्यफलप्रदः ॥ तस्मान्मृदापिकर्त्तव्यं ललाटे तु त्रिपुण्ड्रकमितिस्मृतिः ॥ मृत्स्नया भस्मना वापित्रिपुण्ड्रं बिन्दुसंयुतम् । ललाटेतिलकं कुर्याद् गायत्र्या वहुकुन्तलः इतिमहानिर्वाणतन्त्रम् ॥ येषांवपुर्मनुष्याणां त्रिपुण्ड्रे

यविनाशितम् । श्मशानसदृशंतत्-
स्थानमेष्यं पुण्यकृज्जनैरितिदेवी-
भागवतम् ॥ अपिचतत्रैव नारदं प्रति
नारायणवाक्यम् । त्रिपुण्ड्रये विनि
न्दन्तिनिन्दन्तिशिवमेवते । धारयन्ति
चयेभक्त्या धारयन्ति तमेवते ॥ तिर्य
ग्रेखा: प्रदृश्यन्तेललाटे सर्वदेहिना
म् । तथापि मानवा मूर्खा न कुर्वन्ति
त्रिपुण्ड्रकमिति ॥ त्रयाणां पुण्ड्राणां
समाहार ॥ तद्धितार्थेत्यादिनास
मास. ॥

त्रिपुण्ड्रकम् । न । त्रिपुण्ड्रे ॥ ललाटस्था
टगास्तिस्रो भस्मरेखास्त्रिपुण्ड्रकमि
तिहारावली ॥ त्रिपुण्ड्रमेव । स्वा-
र्थेक. ॥

त्रिपुर: । पु । असुरविशेषे ॥ न । मय
दानवविरचिते कामचारिणि पुरत्र
ये ॥ त्रयाणा पुराणां समाहार. त्रि
पुरम् । तद्धितार्थेतिसमास । पात्रा
दित्वात् स्त्रीत्वाभाव ॥

त्रिपुरदहन । पु । शिवे । हरे ॥

त्रिपुरभैरवी । स्त्री । देवीविशेषे ॥

त्रिपुरमल्लिका । स्त्री । पुष्पवृक्षविशेषे
। क्षेममायाम् । त्रिपुरमालिकेति
गौडेषुख्यातायाम् ॥

त्रिपुरमालिका । स्त्री । मोहिन्याम् ।
वटपत्रायाम् ॥

त्रिपुरा । स्त्री । चतुर्वर्गप्रदाया परदे
वतायाम् ॥ ब्रह्मविष्णुमहेशाद्यैस्त्रि
दशैरर्चितापुरा । त्रिपुरेतितदाना
मकथित दैवतैस्तव ॥ अपिच । त्रि
कोण मण्डलञ्चास्यास्त्रिपुरन्तु त्रिरे
खकम् । मन्त्रन्तुत्र्यक्षर त्रेय तथारू
पत्रय पुन ॥ त्रिविधाकुण्डलीशक्ति
स्त्रिदेवानाञ्चसृष्टये । सर्वं त्रय त्रय
यस्मात् तस्मात्तुत्रिपुरामतेति ॥

त्रिपुरान्तक । पु । महेश्वरे । शूलिनि
। शिवे ॥ त्रयाणांसुवर्णरौप्यलोहा-
ना मयादिनामकानां दैत्यत्रयाणां
वा पुराणि तेषामन्तकोनाशक. । त्र्य
वयवं पुर त्रिपुर तस्यान्तक ॥ त्रया
णां पुराणां समाहार । पात्रादिरि
ति कश्चित् तन्न । तथासतिपञ्चपा-
त्रीतिवत् त्रिपुरीति प्रयोगाभाव
स्यात् ॥

त्रिपुरारि । पु । सदाशिवे ॥

त्रिपुरी । स्त्री । चेदिपुर्याम् । त्रिपुरा
इति प्रसिद्धेदेशे ॥

त्रिपुषा । स्त्री । कृष्णत्रिवृति ॥

त्रिपुष्करम् । न । ब्रह्मकृततीर्थविशेषे ।
ज्येष्ठमध्यमकनिष्ठेषु त्रिषु पुष्कराभि
धह्रदेषु ॥ पु । योगविशेषे ॥ यथा ।
वारा क्रूरा स्तिथिर्भद्रा नक्षत्र भग्न
पादकम् । जाते ऽ नुजारजोयोगो

मरणे ऽत्रत्रिपुष्कर इति ॥

त्रिपुष्टः । पु । राजभेदे । प्राजापत्ये ॥

त्रिपृष्ठ । पु । त्रयाणां लोकानामुपरिस्थिते सत्यलोके ॥

त्रिफला । स्त्री । हरीतक्यादिफलत्रिके ॥ पथ्याविभीतधात्रीणाफलैः स्यात् त्रिफला समैः । फलत्रिकञ्च त्रिफला सावराच प्रकीर्त्तिता ॥ त्रिफला कफपित्तघ्नी मेहकुष्ठहरी सरा । चक्षुष्या दीपनी रुच्या विषमज्वरनाशिनी ॥ त्रयाणां फलानां समाहार । अजादित्वात् द्विगोरिति न ङीप् ॥

त्रिफली । स्त्री । त्रिफलायाम् । इति राजनिर्घण्टः ॥

त्रिबलीकम् । न । पायौ ॥

त्रिभङ्गी । स्त्री । मात्रावृत्तान्तरे ॥ यथा । प्रथम यदि द्गुण वदति विराम त दनु निकाम वसुवसुकम् वसुविमल तुरङ्गम मतिहृदयङ्गम हृषितभुजङ्गम नृपतिलकम् । त्रिशद्विकलास विहितनिवास सततविलास हृदय मुदे मदमुदितभुजङ्गी मोहनरङ्गी वदति त्रिभङ्गीवृत्तमदः ॥ यथा । विविधायुधखण्डितसङ्गरपण्डितरणखण्डितपाखण्डभटे चण्डासुरखण्डिनि हरपुरमण्डिनि शशधरखण्डनिबद्धजटे । भवसागरतारिणि दुर्गतिहारिणि मङ्गलकारिणि मयि सुचिरम गिरिराजनिवासिनि शैलविलासिनि शम्भुविलासिनि देहि वरमिति ॥



त्रिभण्डी । स्त्री । त्रिवृतायाम । श्वेतत्रिधारेतिख्यातौषधौ ॥ त्रीन्दोषान्भण्डते । भडिपरिभाषणे । कर्मण्यण् । ङीप् ॥

त्रिभद्रम् । न । सुरते ॥ इतित्रिकाण्डशेष ॥

त्रिभुवनम् । न । स्वर्गमर्त्यपातालात्मके लोकत्रये । त्रिलोक्याम् ॥ त्रयाणां भुवनानां समाहार ॥ तद्धितार्थेत्यादिना समास ॥

त्रिमद । पु । मुस्ताचित्रकविडङ्गेषु ॥

त्रिमदोत्पथ । त्रि । त्रिभिर्मदैरुद्वृत्ते ॥ विद्यामदो धनमदस्तथैवाभिजनो मदः । एते मदा मदान्धानां त एव हि सतां दमा ॥

त्रिमधु । पु । ऋग्वेदैकदेशे ॥ मधुवाताऋतायतेत्यृक्त्रयवेत्तरि ॥ यथा । त्रिणाचिकेत स्त्रिमधुस्त्रिसुवर्णः षडङ्गविदिति ॥ न । मधुत्रये । मिलितसितामाक्षिकसर्पिःषु ॥ यथा । दुग्धसिता माक्षिकञ्च विज्ञेय मधुरत्रयम् ॥

त्रिमार्गगा । स्त्री । गङ्गायाम् ॥ त्रिभि

र्मार्गैर्गच्छतीतिविग्रहः ।

त्रिमार्गी । स्त्री । त्रिपथे ॥ त्रयाणां मार्गाणां समाहारः ॥ ङीप् ॥

त्रिमुकुट । पु । त्रिकूटाचले ॥

त्रिमुख. । पु । बुद्धविशेषे ॥

त्रिमुखा । स्त्री । बुद्धदेवीविशेषे । मायादेव्याम् । वज्रवाराह्याम् ॥

त्रिमूर्त्ति । पु । बुद्धभेदे ॥ ब्रह्मविष्णुशिवाख्यमूर्त्तित्रयवति ॥ यथा । त्रिमूर्त्तये सर्गस्थितिविलयकर्मार्पितनुते । इतिगङ्गेशोपाध्याय. ॥ तिस्रोमूर्त्तयोयस्य ॥ स्त्री । देवीविशेषे ॥ तिस्रोमूर्त्तयोयस्याः । त्रयोब्रह्मादयोवामूर्त्तयो यस्याः ॥ एकमूर्त्तिरपि भिन्नरूपिणी या जगज्जननपालनक्षये । काप्युतेश्वरतया विवर्त्तते ब्रह्मशक्ति मह मानतोस्मिताम् ॥

त्रियष्टि । स्त्री । क्षेत्रपर्पट्याम् ॥

त्रियामकम् । न । पापे ॥ इतिशब्दमाला ॥

त्रियामा । स्त्री । रात्रौ ॥ त्रयोयामा यस्याः । आद्यन्तयोरर्द्धयोश्चेष्टाकालत्वेन दिनप्रायत्वात् ॥ हरिद्रायाम् ॥ यमुनायाम् ॥ नील्याम् ॥ कृष्णत्रिवृतायाम् ॥

त्रियुगः । पु । यज्ञपुरुषे ॥ कृतयुगेयज्ञाभावात् । कलौछन्नत्वाद्वा ॥

त्रियूह । पु । कपिलाश्वे ॥

त्रिरात्रम् । न । रात्रित्रये । तिसृणांरात्रीणां समाहारे ॥

त्रिरुक्तम् । त्रि । त्रिवारादिना त्रिवारोच्चारिते ॥ विषादे विस्मये हर्षे खेदे दैन्ये ऽवधारणे । प्रसादने सम्भ्रमेपि द्वित्रिरुक्तानदुष्यति ॥

त्रिरेख' । पु । शङ्खे ॥ त्रि । रेखात्रयविशिष्टे ॥ तिस्रोरेखायस्यस' ॥

त्रिलव' । पु । तृतीयांशे ॥

त्रिलवणम् । न । लवणत्रये ॥ यथा । सैन्धवञ्च विडञ्चैव रुचकञ्चतृतीयकम् । मिलितैस्त्रैतत् त्रिलवणं वैद्यशास्त्रेनिरूपितम् ॥

त्रिलोकात्मा । पु । अन्तर्यामिणि ॥ त्रयाणां लोकानामात्मा ॥

त्रिलोकधृक् । पु । विष्णौ ॥ त्रीन्लोकान् धारयति इति । धृञ् । क्विप् ॥

त्रिलोकी । स्त्री । स्वर्गमर्त्यपातालेषु ॥ त्रयाणां लोकानां समाहारः । द्विगोरितिङीप् ॥

त्रिलोकेश । पु । सूर्ये ॥ सदाशिवे ॥ त्रयाणां लोकानामीशो ऽधिष्ठाता ॥ त्रयोलोका सदाशसा स्वेषुकर्मसु वर्त्तन्त इतिवा ॥

त्रिलोचन । पु । त्र्यम्बके । शिवे ॥ त्रीणि लोचनानि यस्यस' । त्रिषु कालेषु

लोकेषु गुणेषु वेदेषु वा लोच न स्थान यस्येतिवा । त्रयोवेदा वर्णा वा अकारोकारमकारा लोचनानि यस्यवा ॥

त्रिलोचना । स्त्री । दुर्गायाम् ॥ बुद्धदेवी प्रभेदे ॥

त्रिलोचनाष्टमी । स्त्री । गौणचान्द्रज्येष्ठस्य कृष्णाष्टम्याम् ॥

त्रिलोहकम् । न । सुवर्णरजतताम्राभिधे धातुत्रये ॥

त्रिलोही । स्त्री । त्रिलोहघटितमुद्राविशेषे ॥

त्रिवर्ग । पु । धर्मकामार्थेषु ॥ धर्मार्थकामा सममेव सेव्या योह्येकसक्तः सजनोजघन्य ॥*॥ यथाऽऽनुकूल्य ह्म्पत्यो स्त्रिवर्गस्तत्र वर्द्धते ॥ त्रिफलायाम् ॥ कटुत्रिके ॥ वृद्धिस्थानक्षये ॥ क्षय स्थानञ्चवृद्धिश्चत्रिवर्गो नीतिवेदिनाम् ॥ सत्वरजस्तमस्सु ॥ त्रयाणांवर्ग समूह ॥ सुनीतौ ॥ इति शब्दरत्नावली ॥

त्रिवर्गक । पु । गोक्षुरके ॥ न । त्रिफलायाम् ॥ त्र्यषणे । कटुत्रिके ॥ त्रयाणाञ्चत्रियविट्सु ॥

त्रिवर्षिका । स्त्री । त्रिवर्षायाङ्गवि । त्रिहायण्याम् ॥ त्रीणिवर्षाणि वयोयस्या. सा त्रिवर्षा । तत.स्वार्थेक: ॥

त्रिविक्रम । पु । विष्णौ ॥ बलिबन्धनार्थं भूर्भुवस्स्वर्गेषु त्रिषुलोकेषुगुणेषुवा त्रयोवा विक्रमा:पादन्यासा यस्यस । त्रिरित्थेवत्रयोलोका कीर्त्तितामुनिसत्तमै । क्रमतेतांस्त्रयासर्वांस्त्रिविक्रमोजनार्दन ॥ इतिहरिवंश ॥ त्रींल्लोकान् विशेषेण क्रामति क्रामोतिवा । क्रमु० अच् ॥

त्रिविध । त्रि । त्रिप्रकारे ॥ तिस्रोविधायस्यस ॥

त्रिविधसर्ग । पु । त्रिधासर्गे ॥

त्रिविष्टपम् । न । स्वर्गे । सुरलोके ॥ विशन्त्यस्मिन् सुकृतिन इति विष्टपम् । विटपपिष्टपविशिपोलपा इति विशेरैणादिक कपन्प्रत्यय. तस्य तुट् । त्रयश्चेतिपत्वम् । त्रिपिष्टपेतिपाठउज्ज्वलदत्तरीत्योक्त । अन्येतु विष्टपेतिद्न्तोष्ठादिमेव पठन्ति । युक्तञ्चैतत् । यत्रभुस्यविष्टपमित्यादौ तथादर्शनात् । अमरकोषेपि विष्टप भुवन जगदितिप्रचुरपाठाच्च ॥ तृतीयं विष्टपम् ॥ त्रिभुवने ॥

त्रिविष्टपसद् । पु । देवे । सुरे ॥

त्रिबीज । पु । श्यामाके ॥ इतिराजनिघण्ट ॥

त्रिवृत् । स्त्री । त्रिवृतायाम् । सुवृतायाम् । श्वेतत्रिधारा इति प्रसिद्धौषधौ

॥ श्वेतात्रिवृद्रोचनी स्यात स्वादुरु-
ष्णासमीरहृत् । रूक्षा पित्तज्वरश्ले
ष्मपित्तशोथोदरापहा ॥ श्वेतकृष्ण
प्रभेदेन द्विविधा त्रिवृदुच्यते । श्या
मात्रिवृत्ततोहीनगुणा तीव्राविरेचि
का ॥ मूर्च्छादाहमदभ्रान्तिकण्ठो
त्कर्षणकारिणी ॥ त्रीन् अवयवान्
वृणोति । वृञ० । क्विप् तुक् ॥

त्रिवृता । स्त्री । त्रिवृदोषधौ ॥ त्रिभि
रवयवैर्वृता ॥

त्रिवृत्करणम् । न । तेजोवन्नानां मि
श्रीकरणे ॥ तत्प्रकारो यथा । तेजोव
न्नानांत्रयाणां मध्ये एकैकद्विधा सम
विभज्यपुनरेकैकभागस्य द्विधाविभा
गकृत्वास्वस्वद्वितीय स्थूल भाग परि
त्यज्यान्यदीयस्थूलभागयोरेकैकस्य
भागस्यसयोजनमिति ॥

त्रिवृत्पर्णी । स्त्री । हिलमोचिकायाम्॥

त्रिवृद्वेद । पु । त्रय्याम् । ऋग्यजु सा
मात्मके वेदे ॥ प्रणवे ॥ ऋचोयजू
षिचान्यानि सामानि विविधानिच ।
एषएव त्रिवृद्वेदो योवेदैनं सवेद
वित् ॥ आद्य यत् त्र्यक्षर ब्रह्म त्रयी
यस्मिन् प्रतिष्ठिता । सगुह्योन्य स्त्रि
वृद्वेदो यस्तं वेद सवेदवित ॥ कर्मणा
त्मनात्रिरावर्त्तते इति त्रिवृत् स
चासौवेदश्चेति कर्म्मधारय. ॥



त्रिवेणी । स्त्री । स्थानविशेषे ॥ साद्वि
धा । युक्तवेणीमुक्तवेणीतिभेदात् ।
तत्र प्रयागे युक्तवेणी गङ्गया यमुना
सरस्वत्यो सङ्गमात् ॥ दक्षिणप्रया
गे मुक्तवेणी गङ्गया यमुनासरस्व
त्योर्वियोगात् ॥ दक्षिणप्रयागस्यसी
मानिर्णयो यथा । प्रद्युम्नस्य ह्रदाद्द
क्षे सरस्वत्यास्तथोत्तरे । तद्दक्षिण
प्रयागस्तु गङ्गातो यमुना गतेति ॥
* ॥ सगरसन्ततिसन्तरणेच्छया प्रच
लितातिजवेन हिमालयात् । इहतु
मन्दमुपैति सरस्वतीयमुनयोर्विर-
हादिव जाह्नवीतिनदियाधिपतिकृ
ष्णचन्द्रराजस्यसभास्थो वाणेश्वरवि
द्यालङ्कार ॥

त्रिवेणु । पु रथमुखस्थेऽवयवविशेषे॥

त्रिवेद । पु । वेदत्रयवेत्तरि ॥

त्रिवेदी । पु । त्रिवेदज्ञे ॥

त्रिवेदी । स्त्री । वेदत्रये ॥ त्रयाणांवेदा
ना समाहारे । द्विगोरिति ङीप्॥
ऐष्टिकपाशुकसौमिकवैदिकात्रये ॥

त्रिवेला । स्त्री । त्रिवृति ॥

त्रिशक्तिधृक् । पु । भगवति ॥ त्रिशक्ति
र्माया तां धरतीतिविग्रह ॥

त्रिशङ्कु । पुं । सूर्यवंशीयन्नृपविशेषे ॥
शलभे ॥ वृषदंशके । मार्जारे ॥
चातके ॥ खद्योते ॥

त्रिशङ्कुज । पु । हरिश्चन्द्रनृपे ॥

त्रिशङ्कुयाजी । पु । विश्वामित्रे ॥

त्रिशरण । पु । वुद्धे । जिने ॥

त्रिशर्करा । स्त्री । मिलितगुडोत्पन्ना हिमोत्थामधुरेति राजनिर्घण्टः ॥

त्रिशला । स्त्री । वृत्तार्हन्मातृविशेषे । वर्द्धमानमातरि ॥

त्रिशाखपत्र । पु । विल्वे । मालूरे ॥

त्रिशिख । पु । राक्षसान्तरे । रावणपुत्रे ॥ विल्वे ॥ न । त्रिशूले ॥ मण्डलान्तरे ॥ किरीटे ॥ त्रि । शिखात्रयवति ॥

त्रिशिखिदला । स्त्री । मालाकन्दे ॥

त्रिशिरा8 । पु । ज्वरे ॥ कुवेरे ॥ रावणपुत्रविशेषे ॥ खरसेनापतौ ॥ त्रीणि शिरांसि यस्य ॥

त्रिशीर्षक्म । न । त्रिशूले ॥

त्रिशूलम् । न । अस्त्रविशेषे । त्रिशिखे ॥ त्रयाणां शूलाना समाहार ॥

त्रिशूली । पु । शिवे ॥ त्रि । त्रिशूलधारिणि ॥

त्रिशृङ्ग । पु । त्रिकोणे ॥ त्रिकूटाद्रौ ॥ त्रीणि शृङ्गाण्यस्य ॥

त्रिशृङ्गी । पुं । रोहितमत्स्ये ॥

त्रिष्टुप् । स्त्री । एकादशाक्षरायां वृत्तौ ॥

त्रिसन्ध्य । त्रि । परदेवतायाम् । परमेश्वरे ॥ त्रिष्वपि कालेषु सृष्टे. पूर्वप्रलयानन्तर स्थितिसमये च सन्ध्योऽव्यभिचारेण वर्त्तमानत्वा.त् ॥

त्रिसन्धि । स्त्री । पुष्पविशेषे । सन्ध्यकुसुमे । फागनिया इतिभाषा ॥ पूर्वापरमध्यसन्धौ ॥

त्रिसन्ध्यम् । न । प्राह्णापराह्णमध्याह्ने । त्रिकाले ॥ प्रात सूर्योदय काले मध्याह्नस्तदनन्तरम् । सायन्तु-र्यस्तसमय त्रिकालानामयङ्क्रमइतिनिर्णीतत्वम् ॥ तिसृणां सन्ध्यानांसमाहार । आवन्तोवेतिपाक्षिकीङीवता ॥ पुष्पविशेषे ॥

त्रिसन्ध्या । स्त्री । जपापुष्पे ॥ देवीविशेषे ॥ अस्या स्थान कुरण्डकतीर्थम् ॥

त्रिसमम् । न । समभये । समहरीतकीनागरगुडरूपे ॥

त्रिसर । पु । कृशरे ॥ इतिहेमचन्द्र ॥

त्रिसरकम् । न । त्रिवारमधुपाने ॥ त्रयाणां सरकाणा समाहार । तद्धितार्थेत्यादिना समाहारेद्विगु । पात्रादिस्वान्नपुसकत्वम् ॥

त्रिसवनम् । न । त्रिकाले । त्रिसन्ध्ये ॥

त्रिसामा । स्त्री । नदीविशेषे । महेन्द्राद्रे. चरन्त्यां स्रवन्त्याम् ॥

त्रिसिता । स्त्री । त्रिशर्करायाम् ॥

त्रिसीम्यम् । न । त्रिकुटेचेपे । त्रिष

ल्पे ॥ त्रिवार सीतया समितम्। नो वयोधर्मेत्यादिनायत् ॥

त्रिसुगन्धि । न । त्रिजातके ॥ त्वगेला पत्रकैस्तुल्यै स्त्रिसुगन्धि त्रिजात कम् ॥

त्रिसुपर्णे । पु । बह्वृचानां वेदभागे ते षाव्रतेच ॥ तद्योगात् पुरुषे ॥

त्रिस्रोता8 । स्त्री । गङ्गायाम् ॥ त्रीणि स्रोतांसियस्याः ॥ नद्यन्तरे ॥

त्रिहल्यम् । न । त्रिगुणाकृते । तृतीया कृते । त्रिसीत्ये ॥ त्रिवार हलेन कृ ष्टम् । मतजनहला.तृकरणाजल्पकर्षे ष्विति यत् ॥

त्रिहायणी । स्त्री । त्रिवर्षायां गवि । व्य व्दायाम् ॥ त्रयोहायना यस्याः । दाम हायनान्ताच्चेति ङीप् ॥ त्रिचतुर्भ्योहा यनस्येति णत्वम् ॥ द्रौपद्याम् ॥ यथा । कृते युगे वेदवती त्रेताया जनकात्म जा । द्वापरे द्रौपदीछाया तेन कृष्णा त्रिहायणीति ब्रह्मवैवर्त्ते श्रीकृष्णज न्मखण्डम् ॥

त्रुटनम् । न । विच्छेदे । टूटना इति भाषा ॥

त्रुटि । स्त्री । संशये ॥ लेश । स्वल्पे ॥ सूक्ष्मैलायाम् ॥ कालमाने । लवद्व ये ॥ द्वयोर्निमेषयोः ॥ त्रुट्यते ऽने नवा । त्रुटच्छेदने । इगुपधात्किदि तीन् ॥

त्रुटित. । त्रि । छिन्ने ॥

त्रुटिवीज । पु । कण्टाम् ॥ इति श-व्दमाला ॥

त्रुटी । स्त्री । त्रुट्यर्थमात्रे ॥ कृदिकारा दितिङीष् ॥

त्रेता । स्त्री । द्वितीययुगे । सत्ययुगान न्तरयुगे ॥ अस्यपरिमाण यथा । त्रि चत्वारिंशल्लक्षेण विंशत्सहस्राधिके नच । चतुर्युग परिमित नरमान क्रमेणच ॥ द्विषड्लक्षपरिमितं च स्रवतिसहस्रकम् । त्रेतायुग परिमि त कालविद्भि प्रकीर्त्तितमिति ब्रह्म वैवर्त्तेप्रकृतिखण्डम् ॥ * ॥ तद्धर्मा यथा ॥*॥ त्रेतायुगे समायातेधर्म पा देनता गत । अव्यक्तेशाग्निताले का केचित् केचिद्दयाश्रया ॥ वि- ष्णुध्यानरतालोका यज्ञदानपराय- णा । वर्णाश्रमाचाररता सुखिन सुस्थचेतस ॥ त्त्राभूमिस्पृश शूद्रा' सर्वेब्राह्मणसेविन । ब्राह्मणाश्चमहा त्मानोवेदवेदाङ्गपारगा ॥ प्रतिग्रह निवृत्ताश्च सत्यसन्धाजितेन्द्रिया । तपोव्रतपरानित्य दातारो विष्णु सेविन ॥ कालवर्षीतडित्वाश्चक्षि य सर्वा पतिव्रता । वसुन्धरापद्मस्या श्या पुत्राश्चपितृसेविन इतिपाद्मेक्रि

यायोगसार ॥ * ॥ अथाद्याद्या भगवतीजीवाना निष्कृति यथा ॥ कृते व्यतीते त्रेतायादृष्ट्वा धर्मव्यतिक्रमम् । वेदोक्तकर्मभिमर्त्यी न शक्ता स्त्वेष्टसाधने ॥ बहुक्लेशकर कर्म्मवैदिक भूरिसाधनम् । कर्त्तु न योग्या मनुजाश्चिन्ताव्याकुलमानसा ॥ त्यक्तुंकर्त्तुं नचार्हन्तिसदाकातरचेतस । वेदार्थयुक्तशास्त्राणि स्मृतिरूपाणि भूतले ॥ तदात्व प्रकटीकृत्य तपस्वाध्यायदुर्वलान् । लोकानतारय पापात् दुःखशोकामयप्रदात् ॥ त्वा विनाकोऽस्तिजीवानां घोरससारसागरे । भर्त्ता पाता समुद्धर्त्ता पितृवत् प्रियकृत् प्रभुरितिश्रीमहानिर्वाणतन्त्रे जीवोद्धारणहेतवे जगन्मातु सदाशिवं प्रतिवाक्यम् ॥ त्रीन् भेदानृणति । पृ० ॥ त्रेताये ॥ एकोक्त्या दक्षिणाग्निगार्हपत्याहवनीयात्मके अग्नित्रये ॥ त्रायां त्रा' सदासन्धुक्षणम् । त्राणिता ॥ यद्वा । त्रायन्तेऽत्राहुतय । त्राभिरिता । त्रित्व मितेतिवा । पृषोदरादि ॥ त्रीणिइता वा । पृषोदरादित्वादेत्वम् ॥

त्रेताय । पु । द्यूतक्रीडासाधनीभूताक्षस्यच्छिदतस्य यस्मिन्भागे त्रयोङ्काभवन्ति तस्मिन् ॥ त्रेतासंज्ञकोऽयः ॥

त्रेधा । अ । त्रिधा । त्रिप्रकारे ॥ सङ्ख्याया विधार्थेधा । एधाच्चेतिधाइत्यस्य तस्यएधाजादेश ॥

त्रैककुदम् । न । सौवीराञ्जने ॥

त्रैकाल्यम । न । कार्यकालतत्पूर्वोऽपरकाले ॥

त्रैगुणिक । पु । वार्द्धुषिके ॥ त्रिगुणार्थं द्रव्य त्रिगुणम् । तत् प्रयच्छति त्रि-गुण गृहीतुमेकगुण ददातीत्यर्थ । प्रयच्छतिगर्ह्यमितिठक् ॥

त्रैगुण्यम । त्रि । त्रिगुणात्मके । सकामे ॥ न । त्रिषुगुणेषु ॥ त्रयोगुणाएव । ष्यञ् ॥ गुणत्रयकार्यपुण्यपापव्यामिश्रकर्मफलसमाहारलक्षणे ससारे ॥

त्रैगुण्यविपर्य्यय । पु । त्रिगुणान्यथात्वे॥

त्रैगुण्यविषय । पु । कर्मकाण्डात्मके वेदे ॥ त्रयाणां गुणानां कर्म त्रैगुण्यङ् काममूल ससार स एव प्रकाश्यत्वेनविषयोयस्यस ॥

त्रैदशिक । पु । दैवे ॥

त्रैधम । अ । त्रैविध्ये । त्रिधा ॥ त्रिप्रकारम् । द्वित्र्योश्चधमुञ् ॥

त्रैधर्म्म्म् । न । हौत्राध्वर्यवौद्गात्रधर्मत्रयार्हेज्योतिष्टोमादिकेकाम्यकर्मणि॥

त्रैपुर । पु । त्रिपुरदेशे । त्रैवे । डाहले ॥ इतिहेमचन्द्र ॥

त्रैलोक्यम् । न । स्वर्गमर्त्त्यपातालात्म

के लोकत्रये ॥ त्रयाणां लोकानां समाहार । त्रिलोकम । तदेव । चतुर्वर्णादित्वात्स्वार्थेष्यञ् ॥

त्रैलोक्यविजया । स्त्री । भङ्गायाम् ॥ इति शब्दचन्द्रिका ॥

त्रैविद्य । पु । वेदत्रयवेत्तरि ॥ ऋग्वेदयजुर्वेदसामवेदलक्षणा हौत्राध्वर्यवौद्गात्रप्रतिपत्तिहेतवस्तिस्रो विद्या यस्य स त्रिविद्य । स्वार्थेतद्धित ॥ तिस्रोविद्यावेद । तदधीतेतद्वेदेत्यण् वा ॥ याज्ञिके ॥ त्रैविद्याख्यव्रते ॥

त्रैविष्टप । पु । अमरे । देवे ॥ त्रिविष्टपे वसति । अण् ॥

त्रैष्टुभम् । न । छन्दोविशेषे ॥ त्रिष्टुवेव । स्वार्थेऽण् ॥

त्रोटकी । स्त्री । रागिणीविशेषे ॥

त्रोटि । स्त्री । कट्फले ॥ चञ्च्वाम् ॥ खगान्तरे ॥ मीनविशेषे ॥ त्रोट्यते । त्रुटच्छेदने चु० । अचइ ॥

त्रोटिहस्त । पु । पक्षिणि ॥ त्रोटिर्हस्तो यस्य ॥

त्रोटी । स्त्री । त्रोट्यर्थमात्रे ॥

त्रोत्रम् । न । प्राजने । तोदने । गवादिपशुताडनदण्डे ॥ त्रायते । त्रैङ् पालने । अशित्रादिभ्यइत्रोत्रौ।इति उत्र ॥

त्र्यक्ष । पु । शिवे ॥ त्रीणि अक्षीणि यस्य ॥

त्र्यक्षर । पु । प्रणवे ॥ अकारादीनि त्रीणि अक्षराणियस्मिन् ॥ घटके ॥ इ० त्रि० ॥

त्र्यङ्कटम् । न । शिक्यप्रभेदे ॥ शौलान्याम् ॥

त्र्यङ्गट । पु । त्र्यङ्कटे ॥ ईश्वरे ॥

त्र्यङ्गुलम् । न । प्रमाणविशेषे ॥ तिस्रोऽङ्गुल्य प्रमाणमस्य । तद्धितार्थेति समास । द्विगोर्नित्यमितिद्वयसचो लुक् । तत्पुरुषस्याङ्गुलेरित्यच् ॥

त्र्यञ्जनम् । न । कालाञ्जनपुष्पाञ्जनरसाञ्जनात्मकेऽञ्जनत्रये ॥

त्र्यध्वगा । स्त्री । गङ्गायाम ॥

त्र्यनीका । स्त्री । सेनाविशेषे ॥ त्रयाणामनीकानां समाहार । अजादेराकृतिगणत्वात् टापाद्विगोरिति प्राप्तोङीप् बाध्यते ॥

त्र्यब्दा । स्त्री । त्रिहायण्याम् ॥ त्रयोऽब्दा वय प्रमाणमस्या । आर्हीयष्ठक् । तस्याध्यर्द्धेतिलुक् ॥

त्र्यस्रतयोग । पु । तिथिवारर्क्षात्मकयोगे ॥ नन्दाभौमार्कवारे यवनमतभिषाद्रौन्त्यचित्राग्निमूलासार्पैन्द्रासमेता भ्रग्निनिभृगुसुते फल्गुयुग्माद्र्युग्मे । सौम्याहेवैजयाख्यान्मृगगुरुहरिभैन्द्राश्विवाय्वाभिजिद्भिर्जीवे रिक्तार्कविश्वादितिवरुणविशाखा

नुराधामघाभि ॥ सौरेपूर्वाधनिष्ठा करकामलजन्मर्क्षयुक्ता यदिस्याद्योगं चाहुस्त्रिपुष्करं सततशुभकरं चामृतास्य मुनीन्द्रा ॥

त्र्यम्बक । पु । महेश्वरे । शिवे ॥ त्रीणि अम्बकानि नयनान्यस्य ॥ यथा त्रयाणां लोकानाम् अम्बकः पितेति वा ॥ त्रीन्वेदान् अम्बते शब्दायते वा। अवि शब्दे । ओष्ठ्योपध । कर्मण्यण् । सञ्ज्ञायामितिकः ॥ त्रिषु लोकेषु कालेषु वा अम्ब शब्दो वेदश्च यस्येति वा ॥ अम्बनम् अम्ब शब्द । त्रयोऽकारोकारमकारा अम्बा शब्दा प्रतिपादका वाचका वा अस्येति वा ॥ त्रीणि पृथिव्यन्तरीक्षद्युलोकाख्यानि अम्बकानि स्थानानि यस्येति वा । लोकत्रयव्यापीसोहि महेश्वर ॥

त्र्यम्बकसख । पु । कुबेरे ॥ त्र्यम्बकस्य सखा । राजाह सखिभ्यष्टच् ॥

त्र्यम्बका । स्त्री । त्रिलोकजनन्यामाद्यायाम् ॥ सोमसूर्यानलाक्षित्वात् त्र्यम्बकासास्मृताबुधै ॥

त्र्यहस्पर्श. । पु । त्रिदिनस्पृशि । तिथित्रयस्पर्शयुक्ते ऽहनि ॥

त्र्यहस्पृक् । पु । वारत्रयेप्येकस्यातिथौ ॥ तिथिर्वारत्रये चैकात्र्यहस्पृग्समुदाहृतम् ॥ अन्यच्च। एकादशी द्वादशी



च रात्रिशेषे त्रयोदशी । त्र्यहस्पृक् तदहोरात्रमुपोष्यासासदातिथि. ॥

त्र्यहस्पृशम् । न । त्र्यहस्पर्शे ॥ यथा । एकस्मिन् सावनेत्वह्नि तिथीनांत्रितयं यदा । तदा दिनत्रय प्रोक्त स्त्व साहस्त्रिकफलम् ॥ अपिच । एकं दिनं यत्रतिथित्रयस्पृशेत्तमाहुर्मुनयो ऽवमाख्यम् । एकातिथि स्त्रीणि दिनानियत्र स्पृशेत्तदाहुस्त्रिदिनस्पृशन्तु ॥ त्र्यहस्पृश नामयदेतदुक्त तत्र प्रयत्न कृतिभिर्विधेव । विवाहयात्रा शुभपुष्टिकर्म सर्व न कार्यं त्रिदिनस्पृशेतु ॥

त्र्यहैहिक । पु । दिनत्रयनिर्वाहोचितधने ब्राह्मणे ॥ ईहाचेष्टा तस्यां भवम् ऐहिकम् । त्र्यहपर्याप्तम् ऐहिकधन यस्य ॥

त्र्याहिक । त्रि । तृतीयेह्निभवेज्वरादौ ॥

त्र्युषणम् । न । त्रिकटुनि ॥ ओषति । उषदाहे । ल्युट् । त्रयाणाम उषणानां समाहार । पात्रादित्वात् स्त्रीत्वन ॥

त्र्यूषणम् । न । त्र्युषणे । व्योषे ॥ ऊषति । ऊषदाहे । ल्युट् । त्रयाणामूषणाना समाहार. । पात्रादित्वात् स्त्रीत्व न ॥

